# प्रस्तावना

आकर्णयन्तु भवन्तो यथा विद्वत्परिषदि सकलजनानन्दोत्पादकत्वेन सर्वसम्मतं प्रकटप्रभावं प्रश्नोत्तरसार्धशतकसन्दर्भाख्यम् इदं प्रकरणं द्वादशपर्वकथा-साधुसमाचारी-जीवविचार-नवतत्त्व-चतुर्विंशतिस्तवाष्टक श्रीपार्श्वनाथस्तुतिसमरादित्यचरित्रा धनेकग्रन्थकर्तृभिः, तथा आरम्भशोष गुर्वावलिप्राकृतश्रीपालचरित्रप्रभृतिबहुप्रकरणटीकाविधातृभिः नीरधिसीमान्तविस्तृतप्रसुवि मलकीर्तिभिः सकलजनानां मनोऽभिलषितदेशनादातृभिः श्रीक्षमाकल्याणकोपाध्यायैः, आचाराङ्ग—सूत्रकृताङ्गस्थानाङ्गभग वत्यङ्गानाम् औपपातिकादुपाङ्गानां जीवकल्पवृत्तिपञ्चकल्पादचूर्णिनिशीथचूर्ण्यादिच्छेदग्रन्थानां तथा अपरेषामपि केषा ञ्चित् आगमानां अनुसारेण विरचितम् ॥ अस्मिन सन्दर्भे एकोत्तरपञ्चाशत् सम्वर्द्धितशतसंख्याप्रश्नोत्तरव्याजेन कृत्स्नागमानाम् अविरुद्धं सर्वगच्छीयानां सम्मतं मत प्ररूपितम् तदालोकने च बहुजनानाम् औत्कण्ठ्यं सम्भाव्य इदानीं श्रीजैनाचार्य्यश्रीकृ पाचन्द्रसूरीणां समत्यनुसारेण सूर्यपुरनिवासिना जव्हेरी फकीरचन्द्र घेलाभाईना प्रकाशितम् अत्र च दृष्टिदोषात् लेखकप्रमादाद् वा यत् पदादिषु विकृतं तत् मनीषिमान्यैः शोध्यम् इति शुभं भवतु

मोहमय्यां रत्नोद्याने कार्तिकशुक्लपञ्चम्याम् विक्रम सम्वत् ।( १९७२)

श्रीसद्गुरुभ्यो नमः ।

श्रीक्षमाकल्याणोपाध्यायविरचितम्

# प्रश्नोत्तरसार्धशतकम् ।

श्रीसर्वज्ञं नत्वा स्मृत्वा पञ्चमगणेशितुर्वाचः । प्रश्नोत्तरसार्धशतं वक्ष्ये सिद्धान्तसंपक्षम् ॥ १ ॥
प्राचीनेषु प्रायः शतकादिषु[1] सन्ति केऽपि ये नार्थाः । स्वपरस्मृतये संगृह्यन्तेऽत्र ते लेशात् ॥ २ ॥
इमे द्वे आर्ये ॥ प्रसन्नाः सन्तु गुरवो बुद्धिं दिशतु भारती । येन सम्यक् प्रजायेत प्रयासः सफलो मम ॥३॥

ननु समवसरणस्थो भगवान् केनाऽऽसनेनोपविश्य देशनां दत्ते, पद्मासनेन किंवा अन्येन केनचिदासनेनेति, उच्यते, अत्र केचिदाचार्याः, एतच्चैत्यगृहादिषु दृश्यमानमेव जिनासनस्वरूपं वदन्ति, परमेष लोकव्यवहारोऽस्ति, निश्चयतस्तु भगवान् पाद

१ श्रीसमयसुन्दरोपाध्यायविरचितविशेषशतकविशेषसंग्रहसमाचारीशतकादिषु ।

पीठे पादौ संस्थाप्य सिंहासने निषण्ण: सन् योगमुद्रया करौ धृत्वा देशनां करोति, अत एव तत् प्रतिरूपत्वादाचार्या अपि प्रायोऽनया मुद्रयैव व्याख्यान कुर्वन्ति, केवल तेषां मुखवस्त्रिकाधारणमेव विशेष:, यदुक्तं चैत्यवन्दनबृहद्भाष्ये ॥

ज पुण भणंति केई ओसरणे जिणमरूवमेव तु। अणयवहारो एसो परमत्थो एरिसो एस्थ ॥ ५३ ॥
सिंहासणे निसण्णो पाए ठविऊण पायपीढंमि ॥ करधरिय जोगमुद्दो जिणनाहो देसण कुणइ ॥ ५४ ॥
तेण वियसूरियरा कुणंति वक्खाणमेयमुद्दाए । जं ते जिणपडिरूवा धरंति मुहपोत्तियं नवरं ॥ ५५ ॥

इति समवसरणे भगवदासनविचार: ॥ १ ॥

ननु भगवान् देशनारम्भे कं प्रणमतीति, चेदुच्यते, चतुर्विधसंघरूपं तीर्थं प्रणमति, यदुक्तमावश्यकनिर्युक्तिबृहद्वृत्त्यो: ॥

तित्थपणाम काउ कहेइ साहारणेण सद्देण। सव्वेसिं सण्णीण जोयणणीहारिणा भगव ॥

इत्यादि एव तीर्थोद्धारप्रकीर्णकेऽपि योज्यम् । तथा चैत्यवन्दन बृहद् भाष्येऽपि प्रोक्तम् ॥

सघोमहाणुभावो अमरिंद नरिंदवंदिओ एसो। तित्थयरे हिंवि नियमा पणमिज्जइ देसणारंभे ॥ १ ॥

इति भगवानपि देशनारम्भे ...

तओण से समणे भगव महावीरे पचमुट्ठिय लोयकरेत्ता सिद्धाण नमोक्कार करेइ इत्यादि ॥

इति भगवतो दीक्षासमये सिद्धनमस्कारविचार ॥ ३ ॥

ननु वीरप्रभोः प्रथमदेशनायां कोऽपि न प्रतिबुद्धस्तत्र किं चतुर्विधा देवा एवाजग्मुः किम्वा मनुष्यादयोऽपि, इति चेदुच्यते, कल्पवृत्तिस्थानाङ्ग वृत्तिप्रवचनसारोद्धारवृहद्वृत्त्याद्यभिप्रायेण तु सर्वेऽप्याजग्मुर्न केवलं देवा एव, तथा च तद्वृत्तिपाठोऽष्टत्रिंशद-धिकशततम ॥ १३८ ॥ दशाश्चर्यद्वारे, श्रूयते हि भगवत श्रीवर्द्धमानस्वामिनो जृम्भिकग्रामाद्बहि समुत्पन्ननिस्सपत्नकेवलालोकस्य तत्कालसमायात संस्थाऽतीवसुरविरचितचारुसमवसरणस्य भूरिभक्तिकुतूहलाकुलितमिलिताऽपरिमिताऽमरनरतिरश्चां स्वस्व भाषानुसारिणा महाध्वनिना धर्मकथां कुर्वाणस्यापि न केनचिद्विरति प्रतिपन्ना केवलं स्थितिपरिपालनायैव धर्मकथाऽभूदित्यादि, इत्यमेव श्रीमदभयदेवसूरिकृतस्थानाङ्गवृत्तिपाठोऽपि बोध्यः, श्रीहरिभद्रसूरिकृताऽवश्यकवृहद्वृत्त्यभिप्रायेण तु तदा देवा एवाजग्मुर्न तु मनुष्यादयस्तथा च तद्वृत्तिपाठ, भगवतो ज्ञानरत्नोत्पत्तिसमनन्तरमेव देवाश्चतुर्विधा उपागता आसन् तत्र प्रव्रज्यादि-प्रतिपत्ता न कश्चिद् विद्यते, इति भगवान् विज्ञाय विशिष्टधर्मकथनाय न प्रवृत्तवान्, इत्यादि यावत्, ततो ज्ञानोत्पत्तिस्थाने मुहूर्तमात्रं देवपूजां जीतमिति कृत्वाऽनुभूय देशनामात्रं कृत्वा, असंख्यदेवकोटिपरिवृतो रात्रौ एव विहृत्य द्वादशयोजनान्यति

कम्याऽपापापुर्यां, समीपे महसेनवनं प्राप्त इत्यादि, श्रीमदाचाराङ्गद्वितीयश्रुतस्कन्धे पञ्चाध्ययने, पुनरयं पाठ', तओणं समये भगव महावीरे उप्पन्न नाणदंसणधरे० पुव्वं देवाण धम्ममाइक्खइ तओ पच्छा मणुस्साण तओणं०गोयमाईण समणाण इत्यादि । तत्त्वं पुनर्विज्ञिप्तश्रुतधरा' । केवलिनो धा विदन्तीति, अत्राह प्रेरको, यदि देवा एवाऽजग्मुस्तर्हि किमा श्रयं, मनुष्याद्यभावे को विरतिं प्रतिपद्येतेति । तत्रोच्यते, अहो केवल देवागमनेऽपि आश्चर्यं युक्तमेव, यतो देवेषु यदि मिथ्यात्व विरतिरूपसम्यक्त्वमात्रमभवत्येव, तदानीं तु सापि न जाता इति आश्चर्यं, यदुक्तमावश्यकबृहद्वृत्तौ ॥ भगवति धर्मस् कथयति मति मनुष्य सर्व विरति देशविरति सम्यक्त्वश्रुतसामायिकानां चतुर्णामन्यतमत्प्रतिपद्यते तिर्यञ्चस्त्रीणि सर्वविरतिवर्ज्यानि द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यन्ते यदि नास्ति मनुष्यतिरश्चां कश्चित्प्रतिपत्ता ततो नियमत एव सुरेषु सम्यक्त्वप्रतिपत्ति-र्भवतीत्यादि, इति श्रीरममोराघरेखनायां मनुष्याद्यागमाऽनागमविचार' ॥ ४ ॥

ननु समवसरणे भगवद्वन्दनार्थं समागतानां देवानां वाहनानि तृतीयप्राकारभूमौ, भवन्ति स्युर्नवेति वा, उच्यते । भव-स्युरित्यादि, इति पञ्चमो विचार' ॥ ५ ॥

ननु समवसरणे केवलिनो भगवन्तं त्रिःप्रदक्षिणीकृत्य, नमस्तीर्थायेत्युक्त्वा उपविशन्ति

बृहत्कल्पचूर्णौ, इत्यमेवोक्तत्वात् तदक्षराणि तु अप्रवचनप्रभाषिरादुक्तानि, इति केवलिनोऽपि प्रथ...
इतिविचार ॥ ६ ॥

ननु समवसरणे गणभृत्केवलिप्रभृतयः कया परिपाट्या, उपविशन्ति, के पुनरुस्थिता एव शृण्वन्तीति, उच्यते, श्रीबृहत्कल्प चूर्णौ प्रथमखण्डे समवसरणाधिकारे विस्तरत एतत्स्वरूपं ज्ञानीहि, तथा च तत्पाठः ।

आयाहिण पुव्वमुहो तिदिसिं पडिरूवगा उ देवकया । जेट्ठगणी अण्णो वा दाहिणपुव्वे अदूरंमि ॥

आयाहिण त्ति, भगवान् चैत्यद्रुमस्य प्रदक्षिणां विधाय पूर्वमुखः सिंहासनमध्ये आस्ते, यासु च दिक्षु भगवतो मुखं न भवति, तासु तिसृष्वपि तीर्थकराकारधारकाणि सिंहासनचामरछत्रधर्मचक्रालङ्कृतानि प्रतिरूपकाणि देवकृतानि भवन्ति, यथा सर्वोऽपि लोको जानीते भगवानस्माकं पुरतः कथयति, भगवतश्च पादमूलं जघन्यत एकेन गणिना गणधरेणाऽविरहितं भवति स च ज्येष्ठोऽन्यो वा भवेत्, प्रायो ज्येष्ठ एव, स च ज्येष्ठगणिरन्यो वा पूर्वद्वारेण प्रविश्य दक्षिणपूर्वदिग्भागे अदूरे प्रत्यासन्न एव भगवतो भगवन्तं प्रणिपत्य निषीदति, शेषा अपि गणधरा एवमभिवन्द्य ज्येष्ठगणधरस्य मार्गतः पार्श्वतश्च निषीदन्ति इति । आह, भुवनगुरुरूपस्य सकलत्रिभुवनातिशायित्वात् त्रिदशकृतानां प्रतिरूपकाणां तेन सह साम्यमसाम्यं वा इत्याशङ्क्य निराकरणायमाह ॥

---

१ तसमाइस्माच ।

जे ते देवहिं कया तिदिसिं पडिरूवगा जिणवरस्स तेसिं पि तप्पभावा तयाणुरूवं हवइ रूवं ॥

यानि तानि देवैः कृतानि तिसृषु दिक्षु जिनवरस्य, प्रतिरूपकाणि तेषामपि तत्प्रभावात् तीर्थकरप्रभावात् तदनुरूपं तीर्थकररूपानुरूपं रूपं भवति ॥ अथ ये यथा भगवतः समवसरणे निषीदन्ति तिष्ठन्ति वा तानभिधित्सुः संग्रहगाथामाह ॥

तित्थाइ से भ सजय देवी वेमाणियाण समणीओ भवणवइवाणमंतर जोइसियाण च देवीओ ॥

तीर्थं गणधरस्तस्मिन्नुपविष्टे सति अतिशयिनः संयता, उपविशन्ति ततो देव्यो वैमानिकानाम् ततः श्रमण्यः तथा भवनपति व्यन्तर योतिष्काणां च देव्य इति अथ, एतदेव विवृणोति ।

केवलिणो तिउण जिण तित्थपणाम च मग्गतो तस्स । मणमादीवि णमंता वयंति सठाणसठाणं,

केवलिन पूर्वद्वारेण प्रविश्य जिनं त्रिगुणं त्रिःप्रदक्षिणीकृत्य नमस्तीर्थायेति वचसा तीर्थप्रणामं च कृत्वा तस्य तीर्थस्य प्रथमगणधररूपस्य शेषगणधराणां च मार्गतः पृष्ठतो दक्षिणपूर्वस्यां निषीदन्ति तथा । मणमादीवित्ति । मनःपर्यायज्ञानिन आदिशब्दात् अवधिज्ञानिनः चतुर्दशपूर्विणो दशपूर्विणो नवपूर्विण आमर्षौषध्यादिविविधलब्धिमन्तश्च भगवन्तं त्रिःप्रदक्षिणीकृत्य नमस्कृत्य च नमस्तीर्थाय नमो गणधरेभ्यो । नमः केवलिभ्य इत्यभिधाय केवलिनां पृष्ठत उपविशन्ति शेषसंयता अपि प्राचीनद्वारेणैव प्रविश्य भुवनगुरुं प्रदक्षिणीकृत्य वन्दित्वा च नमस्तीर्थाय नमो गणधरेभ्यो नमः केव

---

लिभ्यो नमा... शत भागत्वा आतस्थापिना पृष्ठतो निषादान्त एवं मनःपर्यायज्ञान्यादयोऽपि नम त सन्त

व्रजन्ति स्वं स्वं स्थानमिति, तथा वैमानिकानां दम्य पूर्वद्वारेण प्रविश्य भुवनपान्थर्व त्रि प्रदक्षिणीकृत्य नत्वा च नमस्तीर्थाय

नम सर्वसाधुभ्य इत्यभिधाय निरतिशयसाधूनां पृष्ठतस्तिष्ठन्ति न निषीदन्ति श्रमण्योऽपि पौरस्त्यद्वारेण प्रविश्य तीर्थकरं

प्रदक्षिणीकृत्य प्रणम्य च तीर्थस्य साधूनां च नमस्कारम् विधाय वैमानिकदेवीनां पृष्ठतस्तिष्ठन्ति न निषीदन्ति भवनपतिदेव्यो

ज्योतिष्कदेव्यो व्यन्तरदव्यश्च दाक्षिणात्य द्वारेण प्रविश्य तीर्थंकरादीनभिवन्द्य दक्षिणपश्चिमदिग्भागे यथाक्रममेव तिष्ठन्ति।

भवणवई जोइसिया बोद्धव्वा वाणमंतरसुरा य। वेमाणिया य मणुया पयाहिण ज च निस्साए ॥

भवनपतयो ज्योतिष्का वानव्यन्तर सुराश्च एवे भगवन्तमभिवन्द्य यथोपन्यासमेव पृष्ठत उत्तरपश्चिमे दिग्विभागे

तिष्ठन्तीति बोद्धव्याः वैमानिकदेवा मनुष्याश्च च क्रमाद् मनुष्यस्त्रियश्च प्रदक्षिणां कृत्वा तीर्थकरादीनभिवन्द्योत्तरपूर्वदिग्भागे

यथाक्रममेव तिष्ठन्तीति । ज च निस्साएत्ति य परिवारो यं देव मनुष्यं वा निश्राय निश्रां कृत्वा, आगतः स तस्यैव पार्श्वे

तिष्ठतीत्यादि एवमावश्यकबृहद्वृत्तावपि बोध्यं पर तत्रैतावान् विशेषपाठः । तथाहि, अत्र च मूलटीकाकारेण भवनपतिज्योति

ष्कव्यन्तरदेवीनां भवनपति ज्योतिष्कव्यन्तरवैमानिकदेवानां मनुष्याणां मनुष्यस्त्रीणाञ्च स्थानं निषीदनं वा स्पष्टाक्षरैर्नोक्तमेव

स्थानमात्रमेव प्रतिपादित पूर्वाचार्योपदेशलिखितपट्टिकादिचित्रकर्मबलेन तु सर्वा एव देव्यो न निषीदन्ति देवा पुरुषा स्त्रियश्च

निषीदन्तीति प्रतिपादयन्ति केचनेति श्रीमदाचाराङ्गवृत्तौ षष्ठाध्ययने प्रथमोद्देशकेऽपि लेशतोऽयमधिकारो यथा उक्तिवा द्रव्यतो

भावतम तत्र उप्यत' शरीरेण मावतो मानादिमिस्तत्र स्त्रियः समवसरणस्था उभयथाप्युत्थिताः शृण्वन्ति पुरुषास्तु उप्यतो माक्षा माशोत्थितानां तु धर्ममावेदयत्युपविष्टानां च देवानां तिरश्चां च येऽपि कौतुकादिना शृण्वन्ति तेभ्योऽप्याचष्टे, इत्यादि, इति समवसरणे गणधरवन्दनादीनामुपवेशनादिविचार' ॥ ७ ॥

ननु समवसरणे द्वितीयपौरुष्यां भगवति देवछन्दके गते सति कः अत्रोपविश्य धर्मं कथयतीति, उच्यते, ज्येष्ठो गणधरोऽन्यो वा राज्ञा समानीते सिंहासने भगवत' पादपीठे वोपविश्य धर्ममाचष्टे, यदुक्तं श्रीकल्पवृत्तौ प्रथमखण्डे, इत्य यतौ प्रथिते भगवा उत्थाय प्रथमप्राकारान्तरादुत्तरद्वारेण निर्गत्य पूर्वस्यां दिशि स्फटिकमये देवछन्दके यथासुखं समाधिना व्यवतिष्ठते । अथोपरि तीर्थमिविद्दारं भगवत्युत्थिते उपरि द्वितीयपौरुष्यां तीर्थं प्रथमगणधरोऽपरो वा धर्ममाचष्टे ॥ आह, भगवानेव किमिति नाऽऽचष्टे किं तत्कथने केऽपि गुणा सन्ति, उच्यते सन्ति इति ब्रूम के पुनस्ते इत्याह ॥

खेयविणोओ सीसगुणादीयणा पच्चओ उभयओ वि सीसायरियकमो वि य गणहरकहणे गुणा होंति ॥

भगवत' खेदविनोदो भवतीत्यादि आह, स गणधर' क निषण्ण कथयति, उच्यते ॥

राओवणीय सीहासणो वनिविट्ठो व पायवीढमि जिट्ठो अन्नयरो वा गणहारि कहइ बीयाए ॥

राज्ञोपनीते ढौकिते सिंहासने वा तदभावे भगवतः पादपीठे वा, उपविष्टो ज्येष्ठो प्रथमो गौतमस्वाम्यादिस्तदभावे अन्यतरो वा गणधारी, इत्यादि तीए र पौरुष्यामिति इति [illegible] तीयर रुप्प कः [illegible]

ननु समवसरणे भगवत्पुरोऽल्पर्द्धयो देवमनुष्या महर्द्धिकं देवादिकं प्रणामादिना सत्कारविषयं कुर्वन्ति नवा? उच्यते, कुर्वन्त्येव अन्यथा, आज्ञाभङ्गदोषप्रसङ्गः, यदुक्तं बृहत्कल्पभाष्ये आवश्यकनिर्युक्तिबृहद्वृत्त्योश्च तेषां च इत्थं स्थितानां देवनराणां स्थितिं प्रतिपादयन्नाह ॥

एत महड्ढिय पणिवयंति ठियमवि वयंति पणमंता ण वि जंतणा ण विकहा ण परोप्पर मच्छरो ण भयं,

व्याख्या, ये अल्पर्द्धय पूर्वं भगवतः समवसरणे स्थितास्ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति नमस्कुर्वन्ति । अथ महर्द्धिकः प्रथमं स्थितस्ततो यदल्पर्द्धय पश्चादागच्छन्ति ते पूर्वं स्थितमपि महर्द्धिकं प्रणमन्तो व्रजन्ति स्वस्थानमित्यादि, एवं चैत्यगृहसाधुप्रतिश्रयादावपि, विवेकिना अल्पर्द्धिकेन महर्द्धिकस्य विनयप्रतिपत्तिः कर्त्तव्यैव । विनयमूलत्वात्, श्रीजिनधर्मस्येति, अन्यथा सिद्धत्समायामार्यरक्षितस्येव, तस्याज्ञत्वं प्रादुर्भवेदिति, तथा चाय श्रीहेमाचार्यकृतपरिशिष्टपर्वग्रन्थे आर्यरक्षितसंबन्ध , इत्यादि

गत्वा चैत्यगृहद्वारे स्थिरधीरार्यरक्षित । अचिन्तयदविज्ञात कथमन्तर्विशाम्यहम् ॥ ५५ ॥

राज्ञामिव गुरूणां हि सन्निधाने यतस्ततः । विदितोऽपि नोपसर्पेद् दृष्ट्वा तु विदितोऽपि न ॥ ५६ ॥

तदत्रैव क्षण स्थित्वा यस्यन्तर्विशाम्यहम् । श्रातर्वन्दनकायात श्रमणोपासकैः सह ॥ ५७ ॥

इत्यार्यरक्षितस्तस्थौ द्वारेऽपि द्वारपालवत् । विद्रुपा रभसारम्भे विवेको ह्यर्गलायते ॥ ५८ ॥

मालव कौशिकी श्रुत्वा ग्रामरागपरिस्पृशा । स्वाध्यायेनापि साधूना स ययौ लयमेणवत् ॥ ५९ ॥

तत्राऽऽगाड्ढुरो नाम श्रमणोपासकाग्रणीः । वन्दनाय महर्षीणां हर्षेणोत्फुल्ललोचनः ॥ ५० ॥
स त्रिर्नैषेधिकीं कुर्वन् प्रविवेश प्रतिश्रयम् । अथैर्यापथिकीं प्रत्य क्षामयुच्चैस्तरस्वरम् ॥ ५१ ॥
तदनन्तरमाचार्यान् साधूनपि यथाविधि । वन्दित्वा निषसादाऽग्रे विष्टरं प्रतिलिख्य सः ॥ ५२ ॥
अथाचार्यैरभितो भीमांस्तेन सार्द्धं प्रविश्य सः । वन्दनेर्यापथिक्यादि तस्माच्छ्रुतमधारयत् ॥ ५३ ॥
तदर्पितविधिं चाभिनयन् पठनपूर्वकम् । अवन्दताऽऽचार्यपादान् साधूनप्यार्यरक्षितः ॥ ५४ ॥
ढड्ढुरश्रावकं स्वार्यैरभितो नाभ्यवन्दत । सुधीरपि निराम्नाय किंवद् विज्ञातुमीश्वरः ॥ ५५ ॥
निषण्णं सोमननयं तमवन्दितढड्ढुरम् । आचार्या विविदुः कोऽपि श्राद्धोऽयं नूतनः खलु ॥ ५६ ॥
धर्मलाभाशिषं दत्त्वा शरदम्भोऽमलाशयाः । पृच्छन्ति स्म तमाचार्याः कुतो धर्मागमस्तव ॥ ५७ ॥

एवमावश्यकबृहद्वृत्तावपि बोध्यम्, चैत्यविधिप्रकरणवृत्तौ, पुनर्बृहच्चैत्यवन्दनाधिकारे चैत्यवन्दनार्थमागतान् गुरूनपि वन्दते इत्यादि पाठो योगशास्त्रवृत्तौ च विस्तरविधिना चैत्य साधुवन्दनाधिकारो ज्ञातव्यः, पुनः सिद्धान्ते श्रीकृष्णवासुदेव श्रीनेमिजिनसमर्थ, मन्त्रेसाहू चारसायरा वंदणेण वन्दसुत्तमस्ति, तथा चैत्यवन्दनभाष्यादौ, क्षमाश्रमणपूर्वकं, जावंति के वि साहू, इत्यादि गाथाकथनसूत्रकृतीत्यतर्थत्वे साध्वादिवन्दनं युक्तमेवेति । एतेन ये केचिदाधुनिकपण्डितमन्याश्चैत्ये साध्वादिवन्दनं निषेध

यान्, वउक्त ... ...

यक्रमादिविचारः ॥ ९ ॥

ननु सांप्रतं दीक्षावसरे आचार्यादिभिरुत्थाय शिष्यशिरसि यद्वासक्षेप[1] क्रियते । तद् भगवदाज्ञानुसारि किं वा तदाज्ञाविरुद्धमिति, चेदुच्यते ॥ जिनाज्ञानुसार्येवेद, श्रीमद्वीरस्वामिनाऽपि गौतमादिशिरस्सु तद्विहितत्वात् । यदुक्तमावश्यकबृहद्वृत्तौ नियुक्तिगाथाव्याख्याने भगवन्मुखात् । त्रिपदीश्रवणात् गणभृतामुत्पादव्ययध्रौव्ययुक्तं सदिति प्रतीतिरुपजायते अन्यथा सदयोगात् ततश्च ते पूर्वभवभावितमतयो द्वादशाङ्गमुपरचयन्ति, ततो ॥ भगव अणुण्ण करेति सक्को य दिव्व वइरमय थाल दिव्व चुण्णाण भरऊण सामिमुवगच्छति ताहे सामी सीहासणाओ उट्ठेत्ता पडिपुण्ण मुट्ठिं केसराणगेण्हति ताहे गोतमसामिप्पमुहाइक्कारस वि गणधरा ईसिं ओणया परियाडीए ठायति ताहे देवा आउज्जगीत सद्द निरुभति ताहे सामी पुव्व तित्थं गोतमसामिस्सदव्वेहिं गुणेहिं पज्जवेहिंते अणुजाणामि त्ति भणाति चुण्णाणियसे सीसक्खुहति ततो देवा वि चुण्णवास पुप्फवास च उवरिं वासंति गण च सुधम्मसामिस्सधुरे ठवित्ता अणुजाणति एय सामाइयस्स अत्थो भगवतो निग्गओ सुत्त गणहरे हिं तो णिग्गतम् ॥ इत्यलं विस्तरेणेतिगाथार्थ[1] ।

इति गौतमादिशिरस्सु भगवद्, वासक्षेपादिविचार[1] ॥ १० ॥

---

१ सूत्रार्थप्रदेशिरः ।

इति श्रीशीलाङ्काचार्योक्तं, सूत्रकृदङ्गसूत्रो, केवलिनो मुक्त्यधिकारे विपच्यमानतीर्थकरनाम्नो देवस्य च्यवनकाले षण्मासकाले या यदन्त्यन्तं सातोदय एव, इत्यसौ, अपि, यदि साम नो बाधायै। इत्यादि, इत्येकाऽनगारिदेवानां च्यवनचिह्ननिषेधविचारः ॥१२॥

ननु, उपशान्तमोहादिगुणस्थानत्रय ११।१२।१३ वर्तिनो मुनय प्रकृतिस्थितिरसप्रदेशैः कीदृशं कर्म बध्नन्तीति, उच्यते, उपशान्तमोहादिगुणस्थानेषु प्रकृतित सातावेदनीयं अकषायत्वात्, स्थित्यभावेन बध्यमानमेव परिशटति, अनुभावतोऽनुत्तरोपपातिकसुखातिशायि, प्रदेशत स्थूलरूक्षशुक्लादिबहुप्रदेशमिति, उक्त च,

अप्प बादरमउअं बहु च लुक्खं च सुक्किलं चेव। मंदं महव्वयंति य सातबहुलं च तं कम्मं ॥ १ ॥

अल्पं स्थितेरभावात्, बादरं परिणामत, मृदुकं अनुभावत बहु च प्रदेशैः, रूक्षं च स्पर्शत, शुक्लं च वर्णत, मन्दं लेपत स्थूलचूर्णमुष्टिकुड्यापतितलेपवत् महाव्ययमिति, एकसमयेनैव सर्वापगमात् सातबहुलं च अनुत्तरसुरसुखाधिकमित्याद्याचाराङ्गवृत्तौ द्वितीयाध्ययन प्रथमोद्देशक, इत्येकादशादिगुणस्थानत्रये बध्यमानकर्मस्वरूपविचार ॥ १३ ॥

ननु यो जीवो भवे भ्रमन् वारचतुष्टयमाहारकशरीरं कृतवान् स पुनरपि कदाचिन् नरकादिगतिगामी भवेत् किं वा तद्भव एव मुक्तिं गच्छेदिति, उच्यते, स हि, अवश्य तद्भवे मुक्तिमेव गच्छन् नान्यगति, यदुक्तं, प्रज्ञापनासूत्रो षट्त्रिंशत्तमे समुद्घातपदे, चतुष्कृत्व कृताहारकशरीरस्य नरकगमनाभावात् इत्यादि, पुनश्च तद् ऊर्ध्वभवस्य गत्यन्तराऽसंक्रमेणाहारकसमुद्घातमन्तरेण च सिद्धिगमनाभावादिति। इति वारचतुष्टयं कृताहारकशरीरो मुनिस्तद्भवे, एव सिद्धिगामीति विचार ॥ १४ ॥

इत्यादि, चैत्यवन्दनबृहद्भाष्ये । इति पुरुषापेक्षया स्त्रीणां मायां विशेषता धर्म सामर्थ्यामित्याधिकार ॥ १६ ॥

ननु सेवार्त्तसंहननी जघन्यबलो जीव ऊर्ध्वगतौ अधोगतौ च कियद् दूरम् उत्पद्यते, इति, उच्यते, ऊर्ध्वं, कल्पचतुष्टयं यावत् अधश्च नरकद्वय यावदुत्पद्यते, यदुक्त बृहत्कल्पवृत्तौ द्वितीय खण्डे, य सेवार्त्तसंहननी जघन्यबलो जीवस्तस्य परिणामोऽपि शुभो ऽशुभो वा मन्द एव भवति, न तीव्र , तत शुभाशुभकर्मबन्धोऽपि तस्य स्वल्पतर एव, अत एव अस्य ऊर्ध्वगतौ कल्पचतुष्टयाद् ऊर्ध्वम् अधोगतौ नरकपृथ्वीद्वयाद् अध उपपातो न भवतीति प्रवचन प्रतिपाद्यते, एव कीलिकादिसंहननेष्वपि भावना कार्या इति एवमन्यत्रापि दृश्यम् इति सेवार्त्तसंहननिन ऊर्ध्वाऽधोगतिसप्तदशतमो विचार ॥ १७ ॥

ननु शरीरत्यागसमये जीव केन केन मार्गेण निर्गच्छन् कां कां गतिं यातीति, उच्यते, पादाभ्यां निर्गच्छन्, नरकं याति ऊरुभ्यां तिर्यग्गतिं हृदयेन मनुष्यगतिं, शिरसा देवगतिं, सर्वाङ्गेभ्यश्च निर्गच्छन् सिद्धिगतिं याति ॥ यदुक्तं, स्थानाङ्गे पञ्चमाध्य यन तृतीयोद्देशके" पञ्चविहे जीवनिज्जाणमग्गे, प० तं० पायेहिं ऊरूहिं उरेण सिरेण सव्वंगेहिं ५ पाएहिं निज्जाय माणे निरयगामी, भवति, ऊरूहिं निज्जायमाणे तिरियगामी भवइ, उरेण निज्जायमाणे मणुयगामी भवति सिरेण, निज्जायमाणे देवगामी भवति, सव्वगेहिं" निज्जायमाणे सिद्धिगति पज्जवसाणे, पन्नत्ते इति, इति पा दादिभ्यो निर्गच्छतो जीवस्य गतिभेद अष्टादशो विचारः ॥ १८ ॥

ननु स्त्यानर्द्धिनिद्रावतो जीवस्य यद्वासुदेवबलादर्द्धबलं शास्त्रे उक्तमस्ति तदस्मिन् काले विद्यते न वा, उच्यते, नास्तीह क्षेत्रे

पञ्चत्रिचतुर्गुणबलो भवति, इयं च प्रथमसंहनिन एव भवतीत्युक्तमस्ति" इति स्त्यानर्द्धिनिद्रावतो बलभेदादिविचार १९
ननु स्त्यानर्द्धित्रिकोदय सति जीवस्य सम्यक्त्वप्राप्तिर्भवति नवा ? उच्यते, न भवत्येव, यदुक्तमाचाराङ्गवृत्तौ तृतीयाध्ययने
प्रथमोद्देशके, स्त्यानर्द्धित्रिकोदये सम्यक्त्वाद्याप्तिर्भवतिद्धिकस्यापि न भवतीति । किं च यदि स्त्यानर्द्धिनिद्रावत कदाचिदज्ञान
तमारिग्र दत्तं भवति तर्हि तस्य शास्त्रोक्तविधिना लिङ्ग परित्याज्य । तद् विधिस्तु प्राक्तनग्रन्थोपरादवसेय कथं तर्हि कर्मग्रन्थादौ
षष्ठं प्रमत्तगुणस्थान यावत् स्त्यानर्द्धित्रिकोदय प्रतिपाद्यत, उच्यते, मतान्तरमेतदिति संभाव्यत, यद्वा पूर्वमाप्तसम्यक्त्वादे स्त्या
नर्द्धिनिद्रोदयस्तत्र प्रतिपादितोऽस्ति, इति न कश्चिद् विरोधः, तत्त्व तु ज्ञानिगम्यमिति विंशतितमोविचारः २०
ननु एकस्मिन् भव एकजीवस्य कियतां वेदानामुदयो भवति ? उच्यते, कस्यचिद् जन्तो कर्मगतवैचित्र्यात् त्रयाणामप्युदय
संपद्यत, यथा कपिलनाम्नो लघुशिष्यस्य श्य्यातरसुतायामासक्तस्य तत्पित्रा परशुछिन्नसपुष्पपुंचिह्नस्येति, यदुक्तं निशीथचूर्णौ पीठि
कायां ॥ कम्मिय णिओए आयरिया पहुसिस्सपरिवारा वसति, तम्मिय गच्छे कविलो नाम खुडुगो अत्थि, सो से
ज्ञायरघूयाए अज्झोववन्नो सो त पत्थयति, सा नेच्छइ अन्नया सा कन्नट्ठी दहिनिमित्तेण गोउल गता सो
यि कविलगो त चेव गोउल भिक्खायरियाए पट्ठितो, सा तेण खुडुगेण गामगोउलाण अतरा दिट्ठा उप्पायणि
त्थगारा सा तेण तरा भारितामावेणुप्पादिता, अणिच्छमाणी उप्पातिय वा रुहिर अणिच्छमाणी योनिभे-
देसर्थः ॥ तीए रेणु गुण्ठितगत्ताए गतूण पिउणो अक्खाय, सो परसुकुहाड गहाय निग्गतो दिट्ठो यणेण

सयमण पजणण छिन्न ततो उनिक्खतो, सो उनिक्खतो, एगाए अ न गणियाए समाहितो तस्स य तत्य सङ्गओ नपुंसगवेदो उदिओ तओ इत्थिवेदो तमिय वसणप्पवेसे अङ्गोठो भगोआगतो तीए गणियाए इत्थिवेसेण सो ठविओ भवधरितुमारद्धो इति ॥ तस्य एकस्मिन् जन्मनि त्रयो वेदाः प्रतिपाद्यन्ते, अनेन च क्रमेणादौ पुम ततो अपुम छिद्दे जात इत्थिवदसमुदिअ तथिपवेद इत्यर्थ इत्येकस्मिन्नपि भवे वेदत्रयोदय एकविंशति विचारः ॥ २१ ॥

ननु प्रमादयुक्तं सरागसंयत अल्पर्द्धिकापि प्रत्यनीकदेवता छलयेदिति शास्त्रे श्रूयते, पर यतनायुक्त सरागसंयतं कोऽपि छलयेन्न वा उच्यते, यो हि अल्पर्द्धिको अर्द्धसागरोपमात् न्यूनस्थितिको देवो भवेत् स तु यतनायुक्त साधुं छलयितु न शक्नुयात्, यः पुनरर्द्धसागरोपमादिस्थितिकः स प्राग्भववैरस्मरणात् यतनायुक्तमपि छलयेत् तस्य सामर्थ्यसद्भावात्, यदुक्तं निशीथचूर्णौ एको न विसवितमोएंग" पविसित्दकाले सज्झाय करें तस्स इमे दोसा, अन्नतरगाहा सरागसंयतो सरागस्स यतो इदि यविसयादि अन्नतरपमायजुत्तो दवेज विसेसतो महामहेसु त पमायजुत्त पडिणीयदेवता अप्पड्डिया खित्तादि छलण करेज्जा, जयणाजुत्त पुण साहु जो अप्पड्डितो देवो अद्धोदहीतो ऊणट्ठिती सो न सक्केति छलितु अद्धसागरोयमट्ठितितो पुण जयणाजुत्त पि छलेति, अत्थि से सामत्थ त पि पुव्ववेरसंबंधसरणतो कोत्ति छ

गण्ह पुस्तणआय...

तु मोत्तु पलयन्ति देशान्तर गच्छन्तीत्यर्थः पमादपडिसेवणत्ति दारगतमिति ॥ एवं ... साध्य ... परिणामाद दिनद्वयमर्थमल्पाय प्रभावपति केवपार्श्ववलम्भ साधते तदनुदयऽपि च स येपपुन

इत्यादि महा[illegible] इन्द्रमहोत्सवादिषु त्वयम्। इति यवनायुक्तसाधाराप चैत्यवत्वे/ [illegible]भेदादिविचार' १९

ननु स्वकीयैकादशप्रतिमाप्रतिपत्त्या, श्रावक, सम्यक् प्रतिमोद्वहनं, कृत्वा, पश्चात् [illegible] [illegible]

आयाति कश्चित्, तथा चोक्त निशीथचूर्णी द्वितीयखण्डे पोडशोद्देशके, साधो पात्रगवेषणाधिकारे ॥ इदाणिं आगारे त्ति दार आगारकड कहि मग्गियव्व, अत उच्यत कोत्तियगाहा ॥ कोत्तियावणे छन्मति, सिद्धत्ति सिद्धपुत्तो जो पव्वति उक्कामो कते उवकरण घाघामो से उपसो तादे त पडिग्गहमादिसाहूण देश्च निहयस्स घा पय च समणस्स ता पास छन्मति, समणो यासगो वा पडिम करेउ घर पच्छागतो त पडिग्गहग साधूण दिज्ज अदाकड इत्यादि एवं बृहत्कल्पवृत्तावपि द्वितीयखण्ड, उपासकप्रतिमापञ्चाशकमूलवृत्योरपि च बोध्यम्। इति प्रतिमावहनानन्तर कश्चित् श्राद्धो गृहमध्यायातीतिविचार' ॥ २३ ॥

ननु अस्मिन् काल समये समये अनन्तहानिरस्तीति घोषो बहुलोकप्रसिद्धः श्रूयते, स च शास्त्रानुसारी किं वा लोकोक्तिमा त्रमेवेति, १ उच्यत, सांप्रत भविद्रव्य प्रतिसमयमनन्तपर्यायहानेरागमोक्तत्वात् शास्त्रानुसारी एवायं न तु मत् किंचित्; यदुक्तं पञ्चकल्पभाष्ये"

भणिय च दूसमाए गामा होहिंति तु मसाणसमा"। इयमेत्त गुणाहाणी काले वि उ होति माहाणी ॥१॥ समय समय पाता परिहायते उ वण्णमाईया। दव्याइपज्जाया अहोरत्त तत्थिय चेव ॥ २ ॥

दूसम अणुभावेण साहजोगा तु तुच्छमा लेसा"। काले त्रि य दुम्मयम्मा अभिकम्मण हुति ऊमरा य ॥ ३॥
दूसमणअणुभावेण य परिहाणी होति ओसहपलाण। तेण मणुयाण पि उ आउगमेसादिपरिहाणी ॥ ४ ॥

इत्यादि नयार्थेवं यद्वा यदुत, एकस्मिन् वस्तुनि प्रतिसमयानन्तपर्यायनाशे तत्काळमेव सर्वस्यापि वस्तुनो नाशप्रसङ्ग इति प्रतिवस्तुवर्णादिपर्यायानन्तकस्याऽतिमहत्त्वेन प्रतिसमयं हीयमानानन्तकस्य चाल्पीयस्त्वेन अवसर्प्पिणीसमयानां पुनरसंख्येयत्वेन उक्तदोषाप्रसक्ते, एवन एकस्मिन समये प्रतिद्रव्यमेकैकपर्य्यायनाशे सर्वद्रव्यापक्षयाऽनन्तपर्य्यायनाश इति भ्रमोऽपि निरस्त, विस्ताराथिना पुन, जम्बूद्वीपप्रज्ञप्तिवृत्त्यादयो विलोक्या। इति समय समयेऽनन्तहानिरिति घोषस्य व्यासम्मन्तवधिकार ॥ २४ ॥

ननु श्रावकप्रथमोदितसम्बन्ध, गैरिकेण प्रवेपाद् कार्त्तिकश्रेष्ठी स्थाले संस्थाप्य भुक्तमिति श्रूयते तत् कथित् यावे पि ९९ न वा ? उच्यते भ्रान्तिमूलकमेवैतत् समाभ्यते, यत सनत्कुमारचक्रिण प्राक्तने तृतीये भवे जिनधर्मनामश्रावकस्य पृष्ठे क्षर्यां स्थाल कृत्वा जाननमा तापसो भुक्तवान् ततस्तौ धर्मैरावणौ जातौ, इत्यादि कियत् सम्बन्धसादृश्येन, भ्रान्तिवोऽपि क सांविदाभ्यानकस्पसूत्रा एतत्कथन, इत्यते परमानन्दकपरदूषि १ पचाशकविवरण २ पिमम्बलवृत्ति ३ प्रज्ञप्ताकनमम्भेषु तैवं वा। यत ४ कार्त्तिकस्य नागरस्य प्रत्येन गैरिको ... [illegible]

तथा च आवश्यकवृत्तौ पाठः "अन्यदा शोत्पदा ... सर्व ... स्वसियं सो परियसिज्जते अगुलिं चालेति फिलते" इत्यादि एवमन्यत्र पाठोऽपि बोध्य ॥ इति कार्त्तिकश्रेष्ठिशिष्टो तापसस्याभ्यापनं न भाय' प्राक्तनभवे दृष्टमिति विचारः ॥ २५ ॥

ननु देवा असुराश्च यदा परस्पर युध्यन्ते तदा किं विधानि तेषाम् शस्त्राणि भवन्ति" उच्यते, देवास्तु यानि तृणकाष्ठादीनि स्पृशन्ति तान्यत्र तदा शस्त्रतया परिणमन्ति अचिन्त्यपुण्यप्रभावाद्, असुराणां पुनर्नित्य विकुर्वितानि आयुधरत्नानि भवन्ति, तथा पथपा तेषां मन्दतरपुण्यत्वात्, नतु तृणादीनि स्पृश्यमानानि शस्त्रतया परिणमन्तीति। यदुक्त श्रीमद्भगवत्यामष्टादशे शते सप्तमो देशके, ॥ देवासुरसु ण भंते संगामेसु वट्टमाणेसु किं णं तेसिं देवाणं पहरणरयणत्ताए परिणमति, गोयमा० जण्णं ते देवा तणं वा कट्ठं वा पत्तं वा सक्करं वा परामुसंति तणं तेसिं देवाणं पहरणरयणत्ताए परिणमति, जहेव देवाणं तहेव असुरकुमाराणं नो ति णट्ठे समट्ठे असुरकुमाराणं देवाणं णिच्चं विउव्विया पहरणरयणा पण्णत्ता ॥ इति देवासुरयुद्ध आयुधविशेषविचार' ॥ २६ ॥

ननु महर्द्धिको देव' कियतो द्वीपसमुद्रान् समन्तात्परिभ्रम्य सद्य' पश्चादागन्तुं समर्थः। इति चेदुच्यते, रुचकवरद्वीपं यावत् मनुपर्यटितुं समर्थ, ततः परं तु एकया कयाचिद् दिशा गच्छेत्, नतु सर्वत' परिभ्रमेत्, यदुक्तं भगवत्यङ्गे, अष्टादशशतके सप्तमोद्देशे 'देवेणं भंते महड्ढिए जाव महेसक्खे पभू लवणसमुद्दं अणुपरियट्टित्ताणं हव्वमागच्छित्तए" हंता पभू देवेण

१ एवं कासठाणामवि।

दुग्गतिगमाई भेदे पडइ तर्हि जत्थ सो नत्थि कोइ फिर पयसइओ सत्थो अडवि पयओ, तत्थ य एगो रत्त पडो निब्भग्गसिरसेहरो पयण्हवि सपाण पुण्णो उवहणाइ, सो असत्थो तण्हाए पारद्धो पूरेभ अन्भय हलप यासइ, तेसिं उवरिं ण पडइ, ते दुहा मिक्ख इयरो रत्तपडो पुब्भिच्छाण मज्झे मिलिओ सव्वत्थ पडइ, जत्थ सो तत्थ न पडइ, जाव निव्वेदिओ एकओ जाओ जत्थ सो तत्थ न पडइ, एव एयारिसा परस्स पुण्णे उवहणाति ॥ अथ गाथाऽक्षरार्थं भिक्षुरेकः सार्थेन सार्द्ध विर्द अध्वानं प्रविष्ट इति शेषः । तत्र तृष्णा यासार्थं मारब्ध । वार्दलं च वर्षितुमारब्धं यत्र यथां मध्ये सोऽभागधेयो भिक्षुस्तत्र वर्षं न पतति, ततो, द्विकत्रिकादिना द्विधा त्रिधादिना प्रकारेण सार्थस्य भेदं कृतस्तस्मिंश्च कृते यत्र स भिक्षुर्नास्ति तत्र सर्वत्र वर्षं पतति, तस्योपरि न पततीत्ययं दृष्टान्तः अथ अर्थोपनयः, यथा स भिक्षुः पञ्चशतकस्यापि सार्थस्य पुण्यान्युपहतवानेवमन्येऽपि, एवंविधाः परेषां लब्धिमतामपि स्वस्व कर्मक्षयोपशमसमुत्थां लब्धिमुपघ्नन्ति, न चैतद् दृष्टान्ते नोच्यते कर्मक्षयोपशमादीनाम् द्रव्यक्षेत्रकालभावसव्यपेक्षया तत्र तत्र प्रदेशे प्रतिपादनादित्यादि, इति निर्भाग्यसयोगाद् भाग्यवतामपि पुण्योदयविघातविचारः ॥ २० ॥

ननु गृहस्थेन भावतीर्थकरनिमित्तं कृतं यद् अशनादि तथा तीर्थकरप्रतिमायाः पुरोढौकनार्थं कृतं यत् पक्वान्नादि तत् किं साधूनां कल्पते न वा ? उच्यते कल्पते एव, यदुक्तं, साक्षेपपरिहारं श्रीबृहत्कल्पभाष्यवृत्त्योः प्रथमखण्डे, अथ तीर्थकरप्रतिमार्थं यभिर्वर्तितं तत् साधूनां किं कल्पते न वा'[illegible]

इयाइ भत्त भणियाणुसारओ तत्थ दाउमु पओग गिहंति मुणी किंचिवि तेसिं सुहभावबुद्धित्थ ॥ २० ॥
उपादाणकरण भण मिह्नपि तेसिं सजाय राय कुले भोगफल जम्ममहोपूयमाहप्पं ॥ २१ ॥
इत्यादि इति तीर्थकरव भविमानिमित्तकृतपकाभादि साधूनां कल्प्यमिति विचार ॥ ३१ ॥

ननु महर्द्धिका देवा बाह्यपुद्गलान् गृहीत्वैव गमनागमनभाषणव्याकरणोन्मेषनिमेषाकुञ्चनप्रसारणस्थानशयननिषदनविकुर्वणा परिचारणादिक्रिया कुर्वन्ति किम्वा महर्द्धिकत्वादेव बाह्यपुद्गलग्रहणं विनापि कुर्वन्तीति ? उच्यते देवादयः सर्वेऽपि संसारिणो बाह्यपुद्गलान् गृहीत्वा एव गमनादिकं कर्तुं समर्थाः स्युः, न पुनस्तद् ग्रहणं विनेति, यदुक्तं भगवत्यां षोडशशते चतुर्थोद्देशके ॥ देवेणं भंते महिड्ढिए जाव महेसक्खे बाहिरए पोग्गले परियादित्ता पभू आगमित्तए हंतापभू देवेणं भंते महिड्ढिए एवं एतेणं अभिलावेणं गमित्तए २ एवं भासित्तए वा वागरेत्तए वा ३ ओमिसावित्तए वा निमिसावित्तए वा ४ आउटावेत्तए वा पसारेत्तए वा ५ ठाणं वा सेज्जं वा निसीहियं वा चेयत्तए ६ एवं विउव्वित्तए, एवं परियारेत्तए ८ जावहंता पभू इत्यादि । अत्र वृत्तिः, इह सर्वोऽपि संसारी बाह्यान् पुद्गलान् अनुपादाय न काञ्चित् क्रियां करोतीति सिद्धमेव, किन्तु देवः किल महर्द्धिको महर्द्धिकत्वादेव च गमनादिक्रियां मा कदाचित्करिष्यतीति संभावनायां शक्रः प्रश्न पकारत्यादि, इति देवादीनां बाह्यपुद्गलग्रहणं विना न गमनादि क्रियेति विचारः ॥ ३२ ॥

ननु पर ए ‿ ट्गे नित्योऽनित्यो ...

मत्तंगया भिङ्गगणा भणेगपडुविविधेर्वव अर्हम् ! [illegible] सुमन्तीत्यादिश्रयि:, विस्तरार्थिना तयां फलानि परिपाकागतमद्यविधिभि पूर्णानि छुटित्वा छुटित्वा तान् मद्यविधीन् सुमन्तीत्यादिश्रयि: ... घर्मसमावत: कल्पद्रुमाया ददति शुचि पुनर्जीवाभिगमप्रवचनसारोद्धारप्रभृत्यादयो विलोक्या, योगशास्त्रप्रभृतौ चतुर्थप्रकाशेऽप्युक्तं, धर्मसमावत: कल्पद्रुमाया ददति इष्ट तमित्यादि, कल्पद्रुम कल्पवृक्ष मादि शब्दात् चिन्तामण्यादय: परिगृह्यन्ते ते वनस्पतिरूपा उपलरूपाश्च इत्यादि, जम्बूधातकी शाल्मलीप्रमुखा: कुरुवृक्षास्तु रत्नादिपृथ्वीमया ज्ञेया, इति कल्पवृक्षा वनस्पतिमया विस्रसापरिणता नतु देवाधिष्ठिता इत्यादि विचार: ॥ ३५ ॥

ननु कुक्कुटमयूरयो शिरस्था शिखा सचित्ता अचित्ता मिश्रा वा इति, चेदुच्यते, कुक्कुटस्य शिखा सचित्ता, मयूरस्य तु मिश्रा इति ज्ञानीहि यदुक्तं श्रीसदाचाराङ्गस्य द्वितीयश्रुतस्कन्धपीठिकायां तत्र चूडाया निक्षेपो नामादि: षड्विध नामस्थापने क्षुण्णे, द्रव्यचूडाव्यतिरिक्ता सचित्ता कुक्कुटस्य, अचित्ता मुकुटस्य चूडामणिर्मिश्रा मयूरस्य, क्षेत्रचूडालोकनिष्कुटरूपा काल चूडाधिकमासकमासा इत्यादि, इतिकुक्कुटमयूरयो शिखाया सचित्तत्वादिविचार ॥ २६ ॥

ननु असुरादीनान्तु धर्मचिह्नादिस्वरूप संग्रहिण्यादौ स्पष्टमेव निर्दिष्टमस्ति पर ज्योतिष्काणां शरीरं किं वर्णं किंचैतेषां मुकुटे चिह्नमिति ? यदुच्यते चन्द्रसूर्यग्रहनक्षत्रतारारूपा पञ्चज्योतिष्का एतेषु च तारका पञ्चवर्णा शेषा पुनरुत्तप्तकनकवर्णा सर्वेऽपि चैव विशिष्टवस्त्राभरणभूषणा, मुकुटमण्डितमौलय केवल चन्द्राणां मुकुटाग्रभागे प्रभामण्डलस्थानीयम् चन्द्रमण्डलाकार

चिह्न, एवं सूर्यग्रहनक्षत्रताराणामपि स्वस्वमण्डलाकारं चिह्नं, भाष्य यथा च तत्त्वार्थभाष्य, मुकुटेषु शिरोमुकुटोपगूहिभिः प्रभामण्डल
चन्द्रगवत' सूर्यचन्द्रग्रहनक्षत्रतारामण्डलैः यथा स्वचिह्न' विराजमाना द्युतिमन्तो ज्योतिष्का' भवन्तीति अत्र शिरोमुकुटे
पर्णादिभिरिति, मुकुटाग्रभागवर्त्तिभिरित्यर्थः। इति संग्रहिणीवृत्तौ, जीवाभिगमवृत्तौ पुनरस्य विशेष, चन्द्रस्य मुकुटे चन्द्रमण्डल
लाञ्छनं स्वनामाङ्कप्रकटितम्, एवं सूर्यादेरपि इत्यादि, एवं प्रज्ञापनायामपि ज्ञेयम्, इति ज्योतिष्काणां वर्णचिह्नविचारः ॥ ३७ ॥
ननु "ओपणिगसट्ठि भागा" इत्यादि संग्रहिणीगाथायां ताराविमानानां क्रोशार्द्धमायामविस्तारावुक्तौ क्रोशचतुर्भागश्चोच्चत्वं
तत्किमत्र प्रमाणतो न्यूनप्रमाणं ताराविमानं न भवति, इति चेत् शृणु' इदं चेह ताराणां विमानेषु आयामविष्कम्भोच्चत्वं
मानमुत्कृष्टस्थितीनाम् उक्तमस्ति जघन्यस्थितीनां त्वायामविष्कम्भमानं पञ्चधनु शतानि, उच्चत्वं त्वर्द्धतृतीयानि धनु' शतानि
यथाप्रोक्तम्, तत्त्वार्थभाष्य सर्वोत्कृष्टाया स्ताराया अर्द्धक्रोश', जघन्याया' पञ्चधनु'शतानि विष्कम्भार्द्धबाहल्याश्च भवन्ति, सर्वे
यथादया नृलोक इत्यादि ॥ इति ताराविमानप्रमाणद्विविध्यविचारः ॥ ३८ ॥
ननु मनुष्यक्षेत्रात् बहिर्वर्त्तिनां चन्द्रादीनां विमानानि मध्यगेभ्योऽर्द्धप्रमाणानि उक्तानि परं तदायु' किं प्रमाणमिति चेत्,
यत्, आयुस्तेषां मध्यगैस्तुल्यमेव, न तु किंचिदपि न्यून, यदुक्त संग्रहिणीवृत्तौ पञ्चमगाथाव्याख्याने अधेपार्श्वस्येमद्वीपसमुद्र
।धिचन्द्रविमानशासिदेवानाम् वर्षाणां लक्षेणाधिक पल्योपम…
उत्कृष्टमायुरित्यादि इति चरस्थिरचन्द्रादीनां तुल्यायुष्क

ननु जम्बूद्वीपगतप्रभृतयश्चन्द्रादयो यथा जम्बूद्वीपस्य मेरुं ... मेरुमिति, चेदुच्यते। मनुष्यक्षेत्रवर्तिन सर्वेऽपि नोऽपि चन्द्रादयस्तमेव मेरु प्रदक्षिणी कुर्वन्तो भ्रमन्ति किं वा स्वस्वद्वीपगतं मेरुमिति, यदुक्तं संग्रहिणीवृत्तौ। दोससीत्यादि। द्वे चन्द्रपङ्क्ती चन्द्रादयो जम्बूद्वीपस्थमेव मेरुं प्रदक्षिणयन्त परिभ्रमन्ति न तु स्वं स्वमेव, यदुक्तं संग्रहिणीवृत्तौ। दोससीत्यादि। द्वे चन्द्रपङ्क्ती द्वे च सूर्यपङ्क्ती यथाक्रममेकया सूर्यपङ्क्त्या चन्द्रपङ्क्त्या चान्तरिते प्रत्येकं षट्षष्टिचन्द्रसंख्ये षट्षष्टिरविसंख्ये च जम्बूद्वीपगतं मेरुं प्रदक्षिणयन्त्यौ परिसमन्तात्सन्ततो भ्रमत इत्यादि ॥ इति मनुष्यक्षेत्रवर्तिचन्द्रादीनां सुदर्शनमेरुप्रदक्षिणापरिभ्रमण विचारः ॥ ४० ॥

ननु मनुष्यक्षेत्राद् बहिःस्थितानां चन्द्रार्काणां कया व्यवस्थया अवस्थितिः, सूचीश्रेण्या परिरयश्रेण्या वा इति, चेदुच्यते ? चन्द्रप्रज्ञप्तिजीवाभिगमसंग्रहिणीसूत्राद्यनुसारतस्तु सूचीश्रेण्या एषां स्थितिः संभाव्यते, न परिरयश्रेण्या इति, यदुक्तं, जीवाभिग मवृत्तौ सूर्यसूर्यान्तरप्रव्याख्याने ? एतदेवमन्तरपरिमाणं सूचीश्रेण्या प्रतिपत्तव्य, न वलयाकारश्रेण्येति, एवं संग्रहिणीवृत्त्या दावपि बोध्यम्, एव तर्हि मनुष्यक्षेत्राद् बहिरष्टलक्षयोजनप्रमिते पुष्करार्धे चतुर्दिक्षु पङ्क्तिचतुष्टये स्थितानां द्वासप्ततेश्चन्द्राणां द्वासप्ततेश्च सूर्याणां, यदुक्त, चन्द्रप्रज्ञप्त्यादावन्तर,

चंदाओ सूरस्स य सूरा चंदस्स अंतर होइ। पन्नाससहस्साइं जोअणाणं अणूणाइं ?।
सूरस्स य सूरस्स य ससिणो ससिणो य अंतरं दिट्ठं। बहिया माणुस नगस्स जोयणाणं सयसहस्सं ॥ २ ॥

संस्पषा वर्द्धमाना' शुमलक्ष्मा प्रदनधवारापरिवारा षष्ट्याकारा मसप्पा। आलयशूनयाए ...

तिष्ठ बीति तथा तत्र फठ परिशिष्टपर्वण्यपि यथा,

तत्र राजतसौपर्णं प्रकार' कपिशीर्षकै । भाति चन्द्रांशुमवृ षिम्बैर्मर्त्योत्तर इवाचलः ॥ २० ॥

इति राजगृहवर्णन एवमन्न बहूनि मतान्तराणि सन्ति, तत्र तत्त्वं तु केवलिगम्यम्, इति मनुष्यक्षेत्रात् बहिश्चन्द्रसूर्याणाम् अव

स्थितिविचार ॥ ४१ ॥

ननु यदा भरतैरावतक्षेत्रयोर्दिनं भवति तदा महाविदेहक्षेत्रे रात्रिः स्यात् यदा च तयो रात्रिस्तदा विदेहे दिनमिति सर्वत्र

प्रसिद्धमस्ति, पुनर्यस्मिन् दिने भरतादौ वर्षादय ऋतव' प्रादुर्भवन्ति तस्मिन् एव दिने विदेहेऽपि, श्रीभगवत्यां भरताद्यपेक्षया सम

यानन्तर विदेहे वर्षाद्यृतुयोगस्य उक्तत्वात्, ततश्च यदा भरतादौ सर्वोत्कृष्टोऽष्टादशमुहूर्तो दिवसो भवति, तदा विदेहे एतस्य

माणा रात्रि' प्रसज्येत तथा चानुभवात् कथं नागमविरोध, इति चन्मैवं यद्, कर्कसंक्रान्ते' प्रथमदिने पूर्वमहाविदेहे क्षेत्र

मुहूर्तत्रिकप्रमाणे दिवसे क्षपे सति भरतक्षेत्रनरा, उदयन्त सूर्यं पश्यन्ति, भरतेऽपि मुहूर्तत्रिके दिवसे क्षेपे सति पश्चिममहावि

देहमनुष्या अपि उदयन्तं सूर्यं पश्यन्ति। एवं तदेव पश्चिममहाविदेहे मुहूर्तत्रिके दिने क्षेपे सति ऐरावतक्षेत्रनरा उदयन्तं

सूर्यं पश्यन्ति, ऐरावतेऽपि मुहूर्तत्रिके दिने क्षपे सति पूर्वविदेहनरा उदयन्त सूर्यं पश्यन्ति, तेन सर्वक्षेत्रेषु तुल्यप्रमाण एव दि

१ ग्रीष्मर्तौ २ अष्टादशमुहूर्ते दिन दस्य

पमो भवति, एव जम्बूद्वीप ग्रीष्मा यदा सर्वोत्कृष्टाऽष्टादशमुहूर्ता रात्रि र्भवति तदा भरतादौ अन्यतरस्मिन् क्षेत्रे रमन्या मुहूर्त त्रिके अतिक्रान्ते सति विदेहादौ सूर्य उदयं याति, तथा रात्रे मुहूर्तत्रिके शेषे सति अस्त याति १ एवं च सर्वत्र तुल्या रात्रिर्भ वति, एतावता ग्रीष्मणा सर्वोत्कृष्टदिन आपन्यमुहूर्तषट्के सर्वक्षेत्रेषु दिनं भवति सूर्यस्य सर्वाभ्यन्तरमण्डलवर्तित्वात्, तथा शीतया सर्वोत्कृष्टरात्रौ आपन्यमुहूर्तषट्क समत्र रात्रिर्भवति, सूर्यस्य सर्वबाह्यमण्डलवर्तित्वादिति, नात्र कश्चित् विरोध यदुक्तमागम ॥

पुव्वविदेहे सेस मुहुत्ततिग वासरे निरक्कमति । भरहनरा उदयंत सूर कक्कस्स पढमदिणे ॥ १ ॥

भरह वि मुहुत्ततिगे सेस पच्छिमविदेहमणुआ वि । एरवए वि अ एव सेण विण सम्ममो तुल्ले ॥ २ ॥

जवुदीव नयर रयणीइ मुहुत्त तिगे अइक्कंते । उदये तहेव सूरो मुहुत्ततिगे सेसे अत्थमओ ॥ ३ ॥

इत्यादि, इति विदेहभरतादौ दिनरात्रिविचारः ॥ ४२ ॥

ननु यदा सौधर्मेन्द्रो जिनजन्मादिषु इह आगच्छति तदा स्वपदात्यनीकाधिपतिम् आज्ञाप्य सुघोषाघण्टावादनेन सर्वे लोकवासिदेवान् आकारयतीति प्रसिद्धमेव, परमन्ये त्रिषष्टिरिन्द्रा क देवम् आज्ञाप्य किं नामकं च वादित्रं वादयित्वा स्वस्व स्वपदात्यनीकाधिपतिं हरिनैगमे नवासिदेवान् आकारयन्ति ? इतिचेत् ? उच्यते, सौधर्मसनत्कुमारब्रह्मशुक्रप्राणतेन्द्राः स्वस्वपदात्यनीकाधिपतिं हरिनैगमे

पराक्रमं नाम पदात्यनीकाधिपतिं देवम् आज्ञाप्य सा [illegible]
क्रमश द्रुममहाद्रुमौ पदात्यनीकाधिपती, ओघस्वरामहौघस्वराख्यम् घण्टाद्वयं तथा, नागेन्द्रयो मेघस्वरा घण्टा, सुपर्णेन्द्रयो
हंसस्वरा विद्युत्कुमारेन्द्रयोः क्रौञ्चस्वरा, अग्निकुमारेन्द्रयोर्मञ्जुस्वरा, दिक्कुमारेन्द्रयो मञ्जुघोषा, उदधिकुमारेन्द्रयो सुस्वरा,
द्वीपकुमारेन्द्रयोर्मधुरस्वरा, वायुकुमारेन्द्रयोर्नन्दिस्वरा, स्तनितकुमारेन्द्रयोर्नन्दिघोषा घण्टा ज्ञातव्या । तथा दाक्षिणात्यानां नवा-
नामपि धरणेन्द्रादीनां पदात्यनीकाधिपतिर्भद्रसेनः, उत्तराहाणाम् च भूतानन्दादीनां नवानां दक्षनामा स बोध्यः, तथा
व्यन्तरेन्द्रा द्वात्रिंशत् तेषु दाक्षिणात्यानां षोडशेन्द्राणां मञ्जुस्वरा घण्टा, उत्तराहाणां तु मञ्जुघोषा पदात्यनीकाधिपत्यसामीप्या-
मनियतनामक आभियोगिका देवा, ज्योतिष्केन्द्रयो सुस्वरासुस्वरनिर्घोषे घण्टे क्रमेण ज्ञातव्ये पदात्यनीकाधिपती प्राग्वद्
तथा च उक्तं जम्बूद्वीपप्रज्ञप्त्यां प्रथमजिनजन्माधिकारे । सोहम्मगाणं सणंकुमारगाणं बंभलोयगाणं महासुक्कगाणं
पाणयगाणं इंदाणं सुघोसा घंटा हरिणेगमेसी पायत्ताणीआहिवई उत्तरिल्ले णिज्जाणभूमी दाहिणपुरच्छिमिल्ले
रइकरगपव्वए ईसाणगाणं माहिंद लंतग सहस्सार अच्चुअगाण य इंदाणं महाघोसा घंटा लहुपरक्कमो
पायत्ताणीआहिवई दाहिणिल्ले णिज्जाणमग्गे उत्तरपुरच्छिमिल्ले रइकरगपव्वए इत्यादि, असुराणं ओघस्सरा
घंटा णागाणं मेघस्सरा सुवण्णाणं हंसस्सरा विज्जूणं कोंचस्सरा अग्गीणं मंजुस्सरा दिसाणं मंजुघोसा उदहीणं
सुस्सरा दीवाणं महुरस्सरा वाऊणं णंदिस्सरा थणिअराणं णंदिघोसा इत्यादि वाणमंतराणं दाहिणाणं मंजुस्सरा

त्तराण मजुघोसा इत्यादि चतुष्क तच तत एव अवसेयम्, कचित् तु चतुर्विधदेवानां भिन्नमेव चतुर्विधं वादित्रम् उक्तमस्ति
धा च तत् प्रतिपादिका अदृष्टमूला इयं गाथा ।

सुणिऊण सस्ससद मिलति भवणाय वतरा पडह । जोइसियसिंहनाद घंटा वेमाणिया देवा १।

इति अस्या मूलमन्वेष्यमिति चतुः पञ्चेन्द्राणां षष्टा तत्पादकदेवनामादिविचारः ॥ ४२ ॥

ननु एव दशान् संमील्य चतुःषष्टिरिन्द्रा यानि विमानान्यारुह्य इह आगच्छन्ति तद् विमानकारका देवा किं नामन
श्च विमानप्रमाणं किं प्रमाणश्च महेन्द्रध्वजोऽस्य चलतीति १ उच्यते दशानां वैमानिकेन्द्राणाम् यानविमानकारकास्तु देवा
मी, पालक १ पुष्पकः २ सौमनसः ३ श्रीवत्सः ४ नन्दावर्तः ५ कामगम ६ प्रीतिगमो, मनोरमो ८ विमल ९ सर्व
भद्रश्चेति १० भवनपतिव्यन्तरज्योतिष्केन्द्राणां तु सर्वेषाम् विमानकारिणोऽनियतनामान स्वाम्यादिष्टा आभियोगिका देवा
तव्या, तथा वैमानिकेन्द्राणां दशानामपि यानविमानानि आयामविस्ताराभ्यां लक्षयोजनप्रमाणानि उच्चैस्त्वेन स्वविमानप्रमा
नि महेन्द्रध्वजाश्चामीषाम् उच्चैस्त्वेन एकयोजनसहस्रप्रमाणा, तथा असुरेन्द्रयोर्यानविमानम् पञ्चाशद्योजनसहस्राणि विस्तीर्णं
न्द्रध्वजश्च पञ्चयोजनशतोच्चः शेषाणां चरमाष्टादशेन्द्राणां विमानानि पञ्चविंशति योजनसहस्रविस्तीर्णानि महेन्द्रध्व
श्च अर्धतृतीययोजनशतोच्चा, तथा व्यन्तरज्योतिष्केन्द्राणां विमानानि एकयोजनसहस्रविस्तीर्णानि महेन्द्रध्वजाश्च पञ्चविंश

१ मिर्मेवर भवोप्य इम गाथा

स्त्वधिकयोजनयवोधा विशदा', अयं सर्वोऽपि अधिकारो जम्बूद्वीपप्रज्ञप्तिसंग्रहण्यो प्रागुक्ताधिकारे एवास्तीति तत्रैव ग्रन्थयो बहुत्वादत्र न लिख्यते । इति चतुःषष्टीन्द्राणां यानविमानकारकदेवनाम १ विमानप्रमाण २ महेन्द्रध्वजोच्चत्व ३ विचारः ॥ ४४ ॥

ननु इन्द्राणां ये पालकाद्यो विमानकारका देवास्ते स्वप्रदेशाधिष्ठितानि विमानानि रचयन्ति किं वा तद् रहितानि अचित्तपुद्गलरूपाण्यव 'उच्यते' पालकाद्यो देवा एव विमानरूपेण भवन्ति इत्यतो न अचित्तानीति समाध्यते 'पढुक सामानअग्गा दप्पमस्थानक" पालक इत्यादीनि शक्रादीनां क्रमणाऽऽगन्तव्यानि इत्यादि, आभियोगिकाश्चैव देवा विमानी भवन्तीति, अत एव विमाननामान्यपि पालकादीन्येव बोध्यानि, इति यानविमानानां सचित्तादिविचारः ॥ ४५ ॥

ननु यथा लोकपालादीनां भिन्नानि विमानानि तथा इन्द्रसामानिकदेवानामपि महर्द्धिकत्वात् भिन्नान्येव विमानानि भविष्यन्तीति चेदसत् असंभवात्, असंभवश्च उपरितनदेवलोकेषु सहस्रारादिषु सामानिकदेवापेक्षया विमानानाम् अल्पसंख्याकत्वाद् बोध्य, यतः सहस्रारे सर्वाण्यपि षट्सहस्रविमानानि, सामानिकास्तु त्रिंशत् सहस्रा', आनतप्राणतयो समुदितयो चत्वारि शतानि विमानानि सामानिकास्तु विंशतिसहस्रा एव, आरणाच्युतयोर्द्वयोरपि शतानि विमानानि सामानिकास्तु दश सहस्राः, इत्यादि । अन्यच्च यदि सामानिकानां पृथक् विमानानि स्युस्तर्हि कस्यचिदभव्यस्यापि विमानाधिपतित्वप्रसङ्गः, श्रूयते चागमे अभव्यस्य सामानिक संगमको देव', विमानाधिपतित्वं तु अभव्यस्याऽसंगतम् । अभव्यकुलके, चउदसरयणत्त पि य पत्त ण पुणो विमाणसामित्त ॥ इत्यादि वचनेन तन्निषेधात् ततश्च स्वस्वेन्द्रविमानेष्वेव सामानिकदेवनिवासो बोध्यः ।

एवं तर्हि एकस्मिन् विमाने ते महर्द्धिका देवाः कथं स्थित्वा निवसन्तीति चेदुच्यते' देवकल्पे देवलोके ग्रामनगरादिकल्पेषु विमानेषु महर्द्धिकानाम् निवासभूमयो हि पाटककल्पा विज्ञेयाः, यद्येवं तर्हि भगवती तृतीयशतकप्रथमोद्देशके तिष्यकसाधोः सम्बन्धे "सोहम्मे कप्पे सयंसि विमाणंसि त्ति" पाठः कथं संगच्छते 'उच्यते' एतत् सूत्रेण एकस्मिन्नेव निवासाभिविमाने यस्य देवादेर्यावान् प्रदेशो विमानैकदेशभूत' स्वाधीनस्तस्य तावान् स प्रदेशो निजनिजविमानतया मन्यते, अत एव कालीदेव्या चमरचञ्चाराजधान्येकदेशोऽपि निजभवनतया उक्त', एवं चन्द्रप्रभासूर्यप्रभादिदेवीनामपि चन्द्रादिविमानैकदेश एव निज विमानतया उक्तो ज्ञातव्यः, प्रवचनेऽपरिगृहीतदेवीनामेव पृथक् पृथक् विमानानामुक्तत्वात् । इत्यलं विस्तरेण सर्वोऽपि च प्रथमविकारो जम्बूद्वीपप्रज्ञप्तिवृत्त्यादौ द्रष्टव्य', इति सामानिकदेवादीनाम् न पृथग् विमानानीति विचारः ॥ ४६ ॥

ननु परमाऽधार्मिका देवा भव्या एवेति प्रघोषः सत्योऽसत्यो वा उच्यते, सत्य एवेति ज्ञायते, अभव्यकुलके, 'तायत्तिस सुरत्त परमाहम्मियत्त जुयलमणुअत्तं' इत्यादिवचनेन 'अभव्यानां परमाधार्मिकत्वादिभावस्य निषिद्धत्वात् । जन्मान्तरकृत तदुष्कृतोक्तिपूर्वकं ते नारकान् कदर्थयन्ति, अभव्यानां च तन्न संगच्छते इत्यादि, युक्तिमप्यत्र वदन्ति इदा तथा च सति श्रीहीरविजयसूरिभिर्हीरप्रश्ने यदुक्तं परमा धार्मिका भव्या एवेति प्रघोषोऽसत्य एवेत्यादि तत् चिन्त्यं, इति परमाऽधार्मिका देवा भव्या एवेति सप्तचत्वारिंशत् विचार' ॥ ४७ ॥

१ इत्यत्र सामानिकदेवोऽपलक्षण २ यथार्थिक एव

ननु श्रीप्रथमचरमतीर्थकृतो, छद्मस्थकाल सर्वोऽपि प्रमादकालः कियान् अभूत्? उच्यते, श्रीऋषभस्वामिनो वर्षसहस्रप्रमाणम् । छद्मस्थकाल यावद् उग्र तपश्चरत संकलित प्रमादोऽहोरात्रमेव, तथा श्रीवीरप्रभोरपि 'द्वादशवर्षाणि साधिकानि तपश्चरत' प्रमादकालो अन्तर्मुहूर्तमयत्यादि उत्तराध्ययनवृत्तौ कमलसंयम्यां द्वात्रिंशचमाध्ययने शास्त्रान्तरेऽपि उक्त च ?

पीरूसमहाण पमाओ अहमुहुत्त महेय होरत्तं । उवसग्गा पासस्स य वीरस्स य नउण सेसाण ॥ १ ॥ त्ति

इति प्रथमचरमतीर्थकृतोः प्रमादकालप्रमाणविचार ॥ ४८ ॥

ननु शाश्वतजिनप्रतिमा केनाऽऽसनेनोपविष्टा सन्तीति चेदुच्यते, पर्यङ्कासनेनेत्यवेहि (यदुक्तम्) योगशास्त्रवृत्तौ चतुर्थ प्रकाश ॥

स्याज्जङ्घयोरधोभाग पादोपरिकृत सति । पाणिद्वय नाभ्यासन्नमुत्तान दक्षिणोत्तर ॥ २ ॥

यत्र तत्पर्यङ्को नाम शाश्वतप्रतिमानां श्रीमहावीरस्य च निर्वाणकाले आसनमित्यादि १ इति शाश्वतजिनप्रतिमाऽऽसनविचारः ॥ ४९ ॥

ननु चतुर्विंशतितीर्थंकरा किमनशनम् अङ्गीकृत्य केनाऽऽसनेन चावस्थिता मुक्तिं गता? उच्यते, सर्वेऽपि तीर्थंकरा पादपोपगमनेनाऽनशनेन सिद्धा सेत्स्यन्ति चागामिकालेऽपि, यदुक्त प्रवचनसारोद्धारवृत्तौ पर्यङ्कविवरणे च ॥

---

१ पर्यङ्को नाभिगोत्तानदक्षिणोत्तरपाणिक इति पाठान्तरम् । २ मन्त्रराजे प्रथमः पर्यङ्कासने बभूव श्रीवपाश्रित्य वा पश्चिमकालविषये इत्युक्तत्वात् ।

सव्वे सव्वद्धाए सव्वण्णू सव्वकम्मभूमीसु। सव्वगुरू सव्वमहिया सव्वमेरुम्मि अभिसित्ता ॥ १ ॥
सव्वाहि वि लद्धीहिं सव्वे वि परीसहे पराइत्ता। सव्वे वि य तित्थयरा पाओवगमाउ सिद्धिगया ॥२॥
अवसेसा अणगारा तीयपडुप्पन्नणागया सव्वे। केई पाओवगया पच्चक्खाणेंगिणिं केई ॥ ३ ॥
सव्वाओ अज्जाओ सव्वे वि य पढम संघयणवज्जा। सव्वे य देसविरया पच्चक्खाणेण उमरती ॥ ४ ॥

तथाऽस्यां चतुर्विंशतिकायां श्रीऋषभो १ नेमि २ वीरमेति ३ त्रयो जिनाः पर्यङ्काऽऽसनस्थिता मुक्तिं गता अवशेषास्तु जिनाः कायोत्सर्गस्था एव मुक्तिं गता, यदुक्तं, सप्तविंशतस्थानके ?

वीरोसहनेमीण पलियंक सेसयाण उस्सग्गो। पलियंकासणमाण सदेहमाणातिभागूणति ॥ १ ॥

ननु श्रीवीरो देशनां ददान एव सिद्धस्तत् कथं तस्य पादपोपगमनं समच्छते, इति चेदुच्यते, भगवान् पादपोपगमनमङ्गीकृत्य निश्चलीकृतसर्वाङ्गोपाङ्ग मत्वास्मावसतुर्निवाऽऽहारः षोडशप्रहरान् अस्खलितदेशनां दत्त्वा सिद्ध इति, न काऽपि असङ्गतिः, इति तीर्थकरादीनामनशनासनादिविचारः ॥ ५० ॥

ननु अष्टापदगिरेस्तदुपरिस्थजिनचैत्यस्य च किं प्रमाणमिति चेद् 'उच्यते' अष्टयोजनोच्चश्चतुर्योजनविस्तीर्णो अष्टापदाद्रिस्तत्र एकयोजनदीर्घम् अर्धयोजनविस्तीर्णं त्रिगव्यूत्युच्चं चतुर्द्वारं चैत्यं भरतचक्रिणा कारितं 'यदुक्तं' योगशास्त्रे श्रीहेमाचार्यैः,
तमष्टयोजनोच्छ्राय चतुर्योजनविस्तृत। आरोहत सह सौधर्मेजर्मितपरिच्छदः ॥ १० ॥

मध्येकयोजनायाममर्द्धयोजनविस्तृत । त्रिगव्यूत्युन्नत चैत्य चतुर्द्वारं विवेश स ॥ ११ ॥

इत्यादि लोकप्रकाश तु गव्यूतत्रितयोच्छ्रितमिति पाठो ऽस्ति तत्र योगशास्त्रेऽपि त्रयाणां गव्यूतानां समाहारस्त्रिगव्यूतीत्यत्र समासन स एवार्थो ज्ञेय न तु गव्यूतिः क्रोशयुगमिति । इत्यष्टापदगिरेस्तत्रत्यचैत्यस्य च प्रमाणविचार ॥ ५१ ॥

ननु अष्टापदाद्रेरष्टौ सोपानानि श्रूयन्ते तानि किं भरतचक्रिणैव कारितानि अन्येन वा केनचित् कृतानि, इति चेत् 'उच्यते' भरतकाले किल तानि नासन् किन्तु चतुर्थारके मध्ये व्यतीते सति अजितजिन समुत्पन्नतद्वारके सगरचक्रिसुतेन जह्नुकुमारेण दण्डरत्नेन अष्टापदाद्रेरष्टौ सोपानानि कृतानि यदुक्तम् उत्तराध्ययनवृत्तौ,

इति श्रुत्वाऽथ दण्डेन पातयित्वाऽस्य भूभृत । नितम्बदन्तान्नद्राचम् अष्टसोपानताकृता ॥ १ ॥

इत्यादि द्वितीयपत्र्यधिकार लोकप्रकाशे तु भरताधिकार

समक्ष्य दण्डरत्नेन परितोऽष्टापदं गिरिम् । अष्टौ योजनमाना स्तन्मेखला स व्यरीरचत् ॥ २ ॥

इत्युक्तत्वात् भरतेनैव तानि कारितानीति ज्ञायते, शत्रुञ्जयमाहात्म्ये च अष्टमसर्गे

अष्टाभि पदिकाभिस्तं समारुह्याऽतिहर्षत । प्रासादान् जगदीशस्य त्रिःप्रदक्षिणयन् क्षणात् ॥ ५२ ॥

इत्युक्तवद्योक्तमस्ति, सगरपुत्राधिकार षष्ठसर्गे भरताधिकारे पुन

योजनान्ते योजनान्ते दण्डरत्नेन चक्रिराट् । चकाराऽष्टौपदान्यस्मात् ख्यातः सोऽष्टापदो गिरि ॥ ८२ ॥

ह्स्युकमस्ति, इत्यष्टापदाद्रे' सोपानाष्टक केन कृतमिति विचार' ॥ ५२ ॥

ननु अष्टापदोपरि सिंहनिषधा प्रसादे चतुर्दिक्षु स्वस्ववर्णप्रमाणान्युपेताश्चतुर्विंशतिजिनप्रतिमा भरतेन स्थापिताः सन्ति, तत्र पूर्वस्यां दिशि ऋषभाजितौ द्वावेव, दक्षिणस्यां संभवाद्याश्चत्वार', पश्चिमायां सुपार्श्वाद्या अष्टौ, उत्तरस्यां धर्माद्या दश, एतत् संख्यया स्थापने को हेतुरिति चेद् उच्यते, आद्ययोर्देहमानस्य महत्त्वेन एकस्यां दिशि द्वयोरेव 'स्थापनं समगच्छते ततः पर क्रमेण देहमानस्य लघुलघुतरत्वेन चतुरादिसंख्यया स्थापनं युक्तियुक्तमेव, अतो देहमानस्य अल्पबहुत्वमेव अत्र हेतु' संभाव्यते पुनर्यद् बहुश्रुता वदन्ति तद् प्रमाणम्, इति अष्टापदचैत्ये ऋषभादिजिनस्थापनहेतुविचार' ॥ ५३ ॥

ननु श्रीभगवत्सामक्षमशक्तनममोरेषक कृत्रिमवस्तुन' स्थिति' संख्यातं कालं यावदेव उक्ताऽस्ति । ततः कथम् अद्यतन काल यावदष्टापदाद्रौ भरतकारितचैत्यबिम्बसद्भावो, अन्तराचतुर्थारकस्य असंख्यातकोटिकोटीवर्षप्रमाणत्वात् । तथा सत्तु चयऽपि भरतकारितान्येव प्रसादबिम्बानि अपतनकाले यावत् कथ न स्थितानि, यतस्तत्र असंख्याता उद्धारा जाता' श्रूयन्ते इति चेद् १ उच्यते अष्टापदे स्थानस्य निरपायत्वाद् देवादिसांनिध्यात्। जाव इमा ओसप्पिणिति वसुदेव हिण्डौ उक्तत्वाच चैत्यानामियत् काल स्थितिर्युक्तैव शत्रुञ्जये तु स्थानस्य साऽपायत्वाद् भवितव्यतावशेन 'तथाविधदेवसांनिध्याभावाच भरत कारितचैत्यादीनाम् इयत्कालमवस्थानाऽभाव' इति संभाव्यते, सत्य तु तत्त्वविद् वेद्यमिति वसुदेवहिण्डिपाठस्तु, अथ ततो ते जण्हुपमुहा कुमारा पुरिसे आणवेंति गवेसह अट्ठावयतुल्लं पव्वयं जि ... [illegible]

णियइय ततो भमव ते छयति फेवइय गुणकाल आययण अभिसज्जिस्सइ ततो तेण अमवेण भणियं जाव इमाओसप्पिणित्ति इति मे फेवलिजिणाण मतिए सुयति ॥ अत्रार्थे सिद्धान्ताक्षराणि कानीति कश्चिद् वदति चेत् त प्रति जम्बूद्वीपप्रज्ञप्त्यादौ सुषमसुषमारकादिवर्णके वापीदीर्घिकादिकृत्रिमपदार्थसद्भावो दर्शनीय', तीरमध्येऽपि एवत् प्रश्नस्य इत्यमेव समाधान कृतमस्तीति ज्ञेयम्, इत्यष्टापदस्य चैत्यादिस्थितिविचारः ॥ ५४ ॥

ननु क्षीणमोहनामकद्वादशगुणस्थानस्य चरमसमये निःशेषण ज्ञानावरणादिकर्मक्षयं, ततस्तस्मिन्नेव समये केवलज्ञानोत्पत्ति र्युक्ता, तथा चतुर्दशगुणस्थानस्य चरमसमये शेषसकलकर्मक्षयस्ततश्च तस्मिन्नेव समये सिद्धत्व युक्त नतु अनन्तरसमये, शास्त्रे तु तयो रनन्तरसमय एव केवलोत्पत्तिसिद्धत्व श्रूयेते ततः किमत्र भद्रेय" उच्यते अत्र जिनप्रवचने निश्चयव्यवहारात्मके नयद्वये विद्येते तत्र निश्चयनयमतेन द्वादशचतुर्दशगुणस्थानयोरन्त्यसमये एव केवलोत्पत्तिसिद्धत्वे भवतो, व्यवहारनयमतेन तु तदनन्तरसमये इत्युभयमपि भद्रेयं तथाप्रोक्त भाष्ये ॥

आवरणक्खयसमए निच्छइयनयस्स केवलुप्पत्ती । तत्तो णतरसमए ववहारो केवल भणइ ॥त्ति

इति द्वादशचतुर्दशगुणस्थानयोश्चरमसमयादौ केवलोत्पत्त्यादिविचार ॥ ५५ ॥

ननु केवलिसमुद्घातं के कुर्वन्ति के च नेति 'चिदुच्यत' येषामायुःकर्मणां तुल्य प्रमाणं वेदनीयादिकर्मक्षयं भवेत् ते तु

---

१ कर्मग्रन्थ वृत्त

केवलिसमुद्घातं न कुर्वन्ति एव, येषां पुनरायुःस्तत्त्वं शेषकर्मत्रयं च प्रचुरं स्यात् ते कर्मचतुष्टयसमीकरणार्थं कुर्वन्तीत्यादिप्रज्ञापनायां समुद्घातपदे । अत्र पुनर्गुणस्थानक्रमारोहे अयं विशेषः,

यः षण्मासाधिकाऽऽयुष्को लभते केवलोद्गमं करोत्यसौ समुद्घातं, शेषाः कुर्वन्ति वा न वा" उक्तं च ॥

छम्मासाऊ सेसे उप्पन्नं जेसिं केवलणाणं । ते नियमा समुग्घाई य सेसा समुग्घाय भजयव्वा ?

छम्मासाउ त्ति षण्मासाधिकाऽऽयुरित्यर्थः, आवश्यकचूर्णौ तु नैवं तथा च तत् पाठः ये केवलिनः समुद्घातं कुर्वन्ति तत्क्रियाविष्करणार्थमिदं प्रक्रियते । ये अन्तर्मुहूर्तमादिं कृत्वोत्कर्षेण आमासेभ्यः षड्भ्यः आयुषोऽवशिष्टेभ्यो अभ्यन्तरे आविर्भूतकेवलज्ञानास्ते समुद्घाताद् भाज्याः ते समुद्घातं न कुर्वन्तीत्यर्थः, शेषाः समुद्घातं प्रति भाज्याः कस्मात् यस्मात् षण्मासाऽवशिष्टे आयुषि आविर्भूतकेवलज्ञानपर्यायेभ्यः केवलिभ्यः सकाशात् षड्भ्यो मासेभ्यो ये उपरिसमयोत्तराद्व्याऽवशिष्टे आयुषि शेषे आविर्भूतज्ञानाः केवलिनस्ते शेषाः समुद्घातप्रतिभाज्याः, केचित् समुद्घातं कुर्वन्ति केचिन्नेति, नमो सिद्धाणमिति षड्भ्यास्थाने अयं पाठः तत्त्वं तु बहुश्रुतगम्यम्, इति केवलिसमुद्घातं ये कुर्वन्ति तद्विचारः ॥ ५६ ॥

ननु केवलिसमुद्घातं कृत्वा भगवान् तत्कालमेव मुक्तिं याति किं वा अन्तर्मुहूर्तोऽनन्तरम्, उत षण्मासानन्तरमिति चेद् ? उच्यते, अन्तर्मुहूर्तानन्तरमेव मुक्तिं याति प्रज्ञापनायां तथैवोक्तत्वात् तथा च तेद्वृत्तिपाठः, तेणमित्यादि" सोऽपिकृतसमुद्घा

१ ऊणमिति क्षेपः

... प्रतिनिवर्त्तनात् पश्चात् अनन्तरं भवोपग्राहि ...

द्गतो भवति पाश्चात्यकाले यत' समुद्घातात् प्रतिनिवर्त्तत निवर्त्त्य च तत प्रतिनिवर्त्तनात् पश्चात् अनन्तर भवोपग्राहि
योगमपि काययोगमपि युनक्ति व्यापारयति यत' स भगवान् भवधारणीयकर्मसु नामगोत्रवेदनीयेषु, अचिन्त्यमाहात्म्यसमुद्घात
वशतः प्रभूतस्थायुषा सह समीकृतेषु, अपि अन्तर्मुहूर्त्तभाविपरमपदः, तस्मिन् काले यद्यनुत्तरोपपातिकादिनादेवेन मनसा पृच्छयते,
तर्हि व्याकरणाय मनःपुद्गलान् गृहीत्वा मनोयोग युनक्ति, तमपि सत्यम्, असत्यामृषारूप वा मनुष्यादिना पृष्टस्सन् तत्प्रश्नो
वा कायवाङ्मनो वाग्पुद्गलान् गृहीत्वा वाग्योग तमपि प्रागवत् आगमनादौ च काययोगम्" तथाहि भगवान् कार्यवशतः कस्मिंश्चित्
स्थानात् विवक्षित स्थान आगच्छेत् एवं गच्छेत् तिष्ठेत् निषीदेत् वा तथाविधश्रमापगमाय त्वग्वर्तनं वा कुर्यात् इत्यादि, यदि
वा प्रातिहारिक पीठफलकशय्यासंस्तारकं प्रत्यर्प्पयेत्, यस्मादानीत तस्मै समर्प्पयेद्, इह भगवता आर्यश्यामेन प्रातिहारिकपी
ठफलकादीनां प्रत्यर्पणमवोक्त, ततोऽवसीयत नियमादन्तर्मुहूर्त्ताऽवशेषाऽऽयुष्क एव आवर्जीकरणादिकम् आरभते न ततो विशेषा
ऽऽयुष्कोऽन्यथा ग्रहणस्यापि संभवात्, तदपि उपादीयेत" एतेन यदाहुरेके जघन्यतोऽन्तर्मुहूर्त्ते शेषे समुद्घातमारभते उत्कर्षतः
षट्सु मासेषु शेषेष्विति तदपास्तम् द्रष्टव्यमित्यादि" समुद्घातान् निवृत्तश्च अन्तर्मुहूर्त्तेन योगनिरोधं करोतीति, औपपातिकोपाङ्ग
पूर्वा अपि श्रुयम् इति कपाटसमुद्घाताऽनन्तरम्, अन्तर्मुहूर्त्तेन मुक्तिरितिविचारः ॥ १ ॥

ननु अस्मिन् ससारे कश्चित् जीवाः सम्यक्त्वपरिभ्रष्टा' पुनरपि संख्यातेनाऽसंख्यातेनाऽनन्तेन वा कालेन सम्यक्त्वं प्राप्य
सिध्यन्ति कश्चित् तु अप्रतिपतितसम्यक्त्वा एव सिध्यन्ति, ते सर्वेऽपि उत्कर्षत एकस्मिन् समये कियन्तः सिध्यन्ति इति ? चेदुच्यते

केवलिसमुद्घातं न कुर्वन्ति एव, येषां पुनरायुःसत्कं क्षपकर्मत्रयं च प्रचुरं स्यात् ते कर्मचतुष्टयसमीकरणार्थं कुर्वन्तीत्यादिप्रज्ञापनायां समुद्घातपदे । अत्र पुनर्गुणस्थानक्रमारोह अयं विशेषः,

यः षण्मासाधिकाऽऽयुष्को लभते केवलोद्गमं करोत्यसौ समुद्घातं, शेषाः कुर्वन्ति वा न वा" उक्तं च ॥

छम्मासाऊ सेसे उप्पन्नं जसिं केवलणाणं । ते नियमा समुग्घाई य सेसा समुग्घाय भजयव्वि ?

छम्मासाउ त्ति षण्मासाधिकाऽऽयुरित्यर्थं, आवश्यकचूर्णौ तु नैव तथा च सत् पाठः ये केवलिनः समुद्घातं कुर्वन्ति तत्समक्रियाविष्करणार्थमिद प्रभिधयते । य अन्तर्मुहूर्त्तमादिं कृत्वोत्कर्षेण आमासेभ्य' षड्भ्यः आयुषोऽवशिष्टेभ्यो अभ्यन्तरे आविर्भूतकेवलज्ञानास्तु समुद्घाताद् भाज्या' ते समुद्घातं न कुर्वन्तीत्यर्थः, शेषाः समुद्घातं प्रति भाज्याः कस्मात् यस्मात् षण्मासाऽवशिष्टे आयुषि आविर्भूतकेवलज्ञानपर्यायेभ्य केवलिभ्य' सकाशात् षड्भ्यो मासेभ्यो ये उपरिसमयोपरसंख्याऽवशिष्टे आयुषि तत्र आविर्भूतज्ञाना' केवलिनस्ते तथा' समुद्घातप्रतिभाज्या', केचित् समुद्घातं कुर्वन्ति केचिन्नेति, नमो सिद्धाणमिति पद्भ्यास्यान अय पाठः तत्त्व तु बहुश्रुतगम्यम्, इति केवलिसमुद्घातं ये कुर्वन्ति तद्विचार' ॥ ५६ ॥

ननु केवलिसमुद्घातं कृत्वा भगवान् तत्कालमेव मुक्तिं याति किं वा अन्तर्मुहूर्त्ताऽनन्तरम्, उत षण्मासानन्तरमिति चेत् ? उच्यते, अन्तर्मुहूर्त्तानन्तरमेव मुक्तिं याति प्रज्ञापनायां तथैवोक्तत्वात् तथा च लेखकस्तद्वृत्तिपाठः, सेणमित्यादि" सोऽधिकृतसमुद्घात-

१ कृत्वेति पाठः

...न्द्रचक्रवर्त्यादीनामिति चेद् 'उच्यते' गणधरेभ्योऽनन्तगुणहीनं रूपमाहारकलाभ्यमत्साधुकृताऽऽहारक देहानां, तेभ्योऽनन्तगुणहीनमनुत्तरसुराणां, तेभ्यो ग्रैवेयकदेवानां । तेभ्योऽच्युतादीनां क्रमेण प्रत्येकमनन्तगुणहीनं ज्ञेयम् । आवश्यकबृहद्वृत्तौ तथैवोक्तत्वात्, तथा च तत्रैवतत्पाठः, श्रीतीर्थकरगणधराहारकशरीराऽनुत्तरग्रैवेयकाऽच्युतारणप्राणतानतसहस्रारशुक्रलान्तकब्रह्मलोकमाहेन्द्रसनत्कुमारेशानसौधर्मभवनवासिज्योतिष्कव्यन्तरचक्रवर्तिवासुदेवबलदेवमहामाण्डलिकानां रूपेषु क्रमेण प्रत्येकमनन्तगुणहानि' द्रष्टव्या, शेषा राजानो जनपदलोकाश्च षट्स्थानगता भवन्तीत्यादि, इति तीर्थकरादीनां रूपाधिक्यादिविचार' ॥ ६० ॥

ननु देवानां भवधारणीयशरीरम् उत्पत्तिसमये वस्त्रालङ्कारवर्जितं स्वाभाविकाद्भुतरूपयुक्तं भवेत्, तत स्तैस्तस्मिन् यथाऽवसरं वस्त्रालङ्कारा धार्यन्ते, उत्तरवैक्रियमपि शरीरं तथैव भवत् किंवा वस्त्रादियुक्तमेव तद् विरच्यते इति चेद् 'उच्यते' उत्तरवैक्रियं हि वस्त्रालङ्कारयुक्तमेव विरच्यते । ननु तत्र पश्चाद् वस्त्रादिकं धार्यते, यदुक्तं जीवाभिगमसूत्रे" सोहम्मीसाणदेवा केरिसया विभूसाए पण्णत्ता-गोयमा दुविहा पण्णत्ता तं वेउव्वियसरीरा य अवेउव्वियसरीरा य तत्थ णं जे ते वेउव्वियसरीरा ते हारविराइयवच्छा जाव दसदिसाओ उज्जोएमाणा इत्यादि" तत्थ णं जे ते अवेउव्वियसरीरा ते णं आभरणवसणरहिया पगतित्थाविभूसाए पण्णत्ता । इति

विरच्यन्ते पुनर्ये तु सुरैरुत्तरवैक्रिया' ते स्यु' समसमुत्पन्नवस्त्रालङ्कारभासुरा'

मोध्यम्" इति देवानामुपरवैक्रियकशाटकादुदकेनोत्पत्त इति विचार ६१

पागमे पद् पर्याप्तय उक्ता देवानां सप्तत्वादौ पञ्च, विहाए पञ्चतीए पज्जत्तिमाव गच्छतीति वचनेन रते, भाषामन'पर्याप्त्यो' समाप्तौ अन्तरस्य स्तोकत्वादकत्वेन विवक्षणात् पञ्चैवोक्ता इति, यदुक्त राजप्रश्नी "पर्याप्त्यो' समाप्तिकालान्तरस्य प्राय' शेषपर्याप्तिसमाप्तिकालान्तराऽपेक्षया स्तोकत्वादेकत्वेन " भगवतीवृत्तौ तु तृतीयशतकस्य प्रथमोद्देशके पञ्च विहाए पज्जत्तीएत्ति" पर्याप्तिराहारशरीरादीनामभिनिर्वृत्ति र्तोक्ता इह तु पञ्चधा भाषामन'पर्याप्त्योर्बहुश्रुताभिमतेन केनापि कारणेनैकत्वविवक्षणादिस्युक्तमस्ति" प्रवचनसारो शास्त्रिंशदधिकद्विशततमे द्वारे, समगपि हुंसि नवर पञ्चमछट्ठीउ अमराणमिसि वचनात् समकाल पर्या प्तिविचार' ॥ ६२ ॥

उत्सर्गं सर' श्रूयते तत् जम्बूद्वीपेऽस्ति किंवा अन्यत्र कस्मिंश्चिद् द्वीपे किं पुनस्तन् प्रमाण असंख्येययोजनेषु द्वीपेषु मध्ये कस्मिंश्चिद् द्वीपे आयामविष्कम्भाभ्यां संख्येययोजनकोटाकोटी प्रज्ञापनावृत्तौ तृतीयेऽल्पबहुत्वाऽऽख्ये पदे, इति मानससरसःस्थानप्रमाणयोर्विचार' ॥६३॥

कथं विसकीकरोति येन क्षीरमेव कनठम् पिबति नतु उदकमिति १ उच्यत तत्र् जिह्वाया रूप पृथक् भवनात् उर्के च ॥

अवसप्पिणेण जीवाण कृथिया होइ खीरसुदयंमि। हंसा मुसूण जलं आसयइ पय तह सुसीसा ॥ १ ॥
इति नन्दीवृत्तौ, इति हंसस्य क्षीरनीरपृथक्करणहेतुविचारः ॥ ६४ ॥

ननु असुरकुमारदेवाः कदाचित् वैमानिकानां रत्नानि चोरयित्वा एकान्तं व्रजन्ति तदा ते वैमानिका देवा महारैस्तान् पीडयन्ति, तदा वा अन्यदा वा तेषामसातवेदना कियत् कालं भवति, उच्यते, जघन्यतोऽन्तर्मुहूर्त्तम्, उत्कर्षतः षण्मासान् यावत् भवति ॥ यदुक्तं भगवतीवृत्तौ तृतीयशतके द्वितीयोद्देशके, एषां रत्नादायिनामसुराणां काय देव प्रव्यथन्ते महारैर्भवन्ति वैमानिका देवाः तेषां च प्रव्यथितानां वेदना भवति जघन्येनाऽन्तर्मुहूर्त्तमुत्कृष्टतः षण्मासान् यावदिति,, योगशास्त्रवृत्तौ तु देवाश्च सद्वेदना एव प्रायेण भवन्ति, यदि च असद् वेदना भवन्ति ततोऽन्तर्मुहूर्त्तमेव न परत इत्युक्तमस्ति, इति देवानां यावत् कालमसातवेदना भवति तद्विचारः ॥ ६५ ॥

ननु तिर्यग् जृम्भका देवाः क वसन्ति ? उच्यते, तिर्यग्जृम्भका व्यन्तरविशेषाः दीर्घवैताढ्येषु काञ्चनगिरिषु चित्रविचित्र पर्वतयोः यमकपर्वतयोश्च वसन्ति, श्रीभगवत्यां चतुर्दशशते अष्टमोद्देशके तथैव उक्तत्वात् अन्यथापि उक्तम् ॥

कञ्चणगिरिकूडेसु चित्तविचित्ते य जमगसमगे य। एएसु ठाणेसु वसति तिरिजंभगा देवा ॥ १ ॥

इति तिर्यग् जृम्भकदेवानां निवासस्थानविचारः ॥ ६६ ॥

ननु देवा नारकाश्च यान् पुद्गलान् आहारतया गृह्णन्ति तान् तथा कार्मणशरीरपुद्गलान् किम् अवधिज्ञानादिना जानन्ति पश्यन्ति उत नेति चेत् ? उच्यते, नारकास्तु न जानन्ति न पश्यन्ति, देवास्तु कश्चित् जानन्ति केचिन्नेति, श्रीसमवायाङ्गसूत्रवृत्त्यादौ तथैव उक्तत्वात् तथा च तत्रैवतत्त्व पाठः "पोग्गलानेव जाणंति त्ति," अयमर्थः, नारका यान् पुद्गलान् आहारयन्ति तानवधिनाऽपि न जानन्ति अविषयत्वात् तदवधेस्तेषां, न पश्यन्ति चक्षुषाऽपि लोमाहारत्वात् तेषां, एवम् असुरा व्यन्तरज्योतिष्काश्च, वैमानिकास्तु ये सम्यग्दृष्टयस्ते जानन्ति विशिष्टावधित्वात् पश्यन्ति चक्षुषोऽपि विशिष्टत्वात्, मिथ्यादृष्टयस्तु न जानन्ति न पश्यन्ति प्रत्यक्षपरोक्षज्ञानयोरुभयोः अस्पष्टत्वादित्यादि, संग्रहिणीवृत्तौ तु देवानां मनसा परिकल्पिताः शुभाः पुद्गलाः सर्वेणव कायेन आहारतया परिणमन्ति, नारकाणां तु अशुभाः तांश्च आहार्यमाणपुद्गलान् विशुद्धावधिचक्षुर्भावात् अनुत्तरसुरा एव जानन्ति पश्यन्ति, न पुनर्नारकग्रैवेयकान्तदेवा इत्युक्तमस्ति, प्रज्ञापनावृत्तावपि एष एवाऽभिप्रायोऽस्ति तत्त्वं तु ज्ञानिगम्यं, तथा कार्मणशरीरपुद्गलानपि अनुत्तरसुरा एव जानन्ति पश्यन्ति, न तु ग्रैवेयकान्तदेवाः तदवधेरगोचरत्वात्, यदुक्तं प्रज्ञापनावृत्तौ, इन्द्रियपदे प्रथमोद्देशके यद्यपि आराधीयेष्वपि कल्पेषु ग्रैवेयकेषु च सम्यग् दृष्टयो देवा सन्ति तथाऽपि तेषामवधिर्न कार्मणशरीरपुद्गलविषय इत्यादि, इति देवनारकाणामाहारादिपुद्गलज्ञानाज्ञानविचार ॥ ६९ ॥

---

१ दर्शितवन्ते ।

ननु अभव्या अपि कश्चिद् यथाप्रवृत्तिकरणेन ग्रन्थिदेशे स्थिता द्रव्यलिङ्गं प्राप्य श्रुताऽभ्यासं चेत् कुर्वन्ति तर्हि कियत् श्रुतं लभन्त, यथा क्रियाबलात् स्वर्ग यान्ति चेद् कियत् दूरं व्रजन्ति ? उच्यते, अभव्या उत्कृष्टत एकादशाङ्गानि श्रुत लभन्ते, यदुक्तं विशेषावश्यकसूत्रवृत्तौ ॥

तित्थकराइपूअं दट्ठुं अण्णेण वा वि कज्जेण। सुअसामाइयलाभो होइ अभव्वस्स गंठिम्मि ॥ १५ ॥

अर्हदादिविभूतिम् अतिशयवतीं दृष्ट्वा धर्माद् एवं विध' सत्कारो देवत्वराज्यादयो वा प्राप्यन्ते इत्येवम् उत्पन्नबुद्धेरभव्य निर्वाणश्रद्धानरहितस्याऽभव्यस्याऽपि कष्टानुष्ठानं किंचिदङ्गीकुर्वतो ज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाभो भवेत्, तस्याऽपि एकादशाङ्गपाठानुज्ञानादिति, यथा अभव्या उत्कर्षेत उपरिमग्रैवेयकापि यावत् गच्छन्ति, यदुक्त भगवतीसूत्रे प्रथमशते द्वितीयोद्देशके "मिथ्यादृष्टय एव अभव्या भव्या वा असंयतभव्यद्रव्यदेवा' श्रमणगुणधारिणो निखिलसमाचार्यनुष्ठानयुक्ता द्रव्यलिङ्गधारिणो गृह्यन्त, तेहि अखिलकेवलक्रियाप्रभावत एव उपरिमग्रैवेयकेषु उत्पद्यन्ते, इति असंयताश्च ते सत्यपि अनुष्ठाने चारित्रपरिणामशून्यत्वादित्यादि" एव प्रवचनसारोद्धारग्रन्थस्योपरि नवत्यधिकशततम १९० द्वारे षोध्यम्, यत्तु कश्चिम् नव पूर्वान्त श्रुतम् अभव्यानाम् अङ्गारमर्दकाचार्यादीनाम् श्रूयते, तत् सूत्रपाठमात्रमवसीयते तेषां पूर्वलब्धेरभावात्, यद् वा नवपूर्वाणि पूर्वधरलब्धि विनाऽपि भवन्ति, इत्यभव्यानां कियत् श्रुतलाभ' कियत् दूर [illegible]

नन्वामर्षौषधि–विप्रुडौषधि–खेलौषधि–जल्लौषधि–सर्वौषधि–संभिन्नश्रोतो–ऽवधि ऋजुमति–विपुलमति–चारणा–ऽऽशीविष–केवलि–गणधर–पूर्वधर–तीर्थकर–चक्रवर्ति–वासुदेव–बलदेव–क्षीरमधुसर्पिराश्रवे–कोष्ठकबुद्धि–पदानुसारि–बीजबुद्धि–तेजोलेश्या–ऽऽहारक–शीतलेश्या–वैक्रियशरीरा–ऽक्षीणमहानसी–पुलाकलब्धि–लक्षिका अष्टाविंशतिर्लब्धयो भव्यपुरुषाणां भवन्ति, परं भव्यमानुषीणाम् अभव्यपुरुषाणामभव्यस्त्रीणां च कति लब्धयः स्युरिति चेत्? उच्यते, आसां मध्यात्, अर्हच्चक्रि वासुदेव बलदेव–संभिन्नश्रोतश्चारणपूर्वधर–गणधर–पुलाका–ऽऽहारक–लक्षणा दशलब्धयो भव्यस्त्रीणां न भवन्ति, शेषा अष्टादश भवन्ति, यच्च मल्लिस्वामिनः स्त्रीत्वेऽपि तीर्थकरत्वम् अभूत्, तदाश्चर्यभूतत्वान्न गणनीयं, तथा केवलित्वऋजुमति विपुलमति लक्षणलब्धित्रययुता पूर्वोक्ता दशलब्धयोऽर्थात् त्रयोदशलब्धयोऽभव्यपुरुषाणां न भवन्ति, शेषाः पञ्चदश भवन्ति, तथा अभव्यस्त्रीणामपि एता पूर्वोक्तास्त्रयोदश लब्धयो न भवन्ति, चतुर्दशी मधुक्षीराश्रवलब्धिरपि तासां न भवति, शेषाः चतुर्दशलब्धयो भवन्ति अपीति, यदुक्तं प्रवचनसारोद्धारग्रन्थे "आमो सहीत्यादिगाथा चतुष्टयं तथा"

---

* तत्र चतुर्दशपूर्वमिदं इति आवश्यकगता। १ आमोसही। २ विप्पोसही ३ खेलोसही ४ जल्लोसही चेव ५ सव्वोसही ६ संभिन्ने ७ ओही ८ रिउ ९ विउलमइ लद्धी १० ॥ १ ॥ चारण ११ आसीविस १२ केवलिय १३ गणहारिणो य १४ पुव्वधरा १५ अरहंत १६ चक्कवट्टी १७ बलदेवा १८ वासुदेवा १९ य ॥ २ ॥ खीरमहुसप्पि आसव २० कोट्ठयबुद्धी २१ पयाणुसारी २२ य तह बीयबुद्धी २३ तेयग २४ आहारग २५ सीयलेसा २६ य ॥ ३ ॥ वेउव्विदेहलद्धी २७ अक्खीणमहाणसी २८ पुलाया २९ य परिणामतववसेणं एमाइ हुंति लद्धीओ ॥ ४ ॥

भवसिद्धियपुरिसाण एयाओ हुंति भणियलद्धीओ। भवसिद्धियमहिलाण वि जत्तिय जायंति त वोच्छं ॥१॥
अरिहन्तचक्किकेसव बलसंभिन्ने य चारणा पुव्वा। गणहर पुलाय आहारगं च न हु भवियमहिलाण ॥ २ ॥
अभवियपुरिसाण पुण दसपुव्विल्लाउ केवलित्तं च। उज्जुमई विउलमई तेरस एयाउ नहु हुंति ॥ ३ ॥
अभवियमहिलाण वि हु एयाउ ण हुंति भणियलद्धीओ। महुक्खीरासवलद्धी वि नेय सेसा उ अविरुद्धा ४

इति यत्तु प्रज्ञापनावृत्तौ स्त्रीणां मुक्तिस्थापनाधिकारे उपन्यस्तया
बादरपिण्डसमत्तादि लब्धिविरहे ध्रुव कनीयसि च जिनकल्पमनःपर्यवविरहेऽपि न सिद्धिविरहोऽस्ति ?
इति ग्रन्थान्तरीयार्य्यया स्त्रीणां वैक्रियलब्ध्याद्यभाव उक्तः स तु परपक्षीयमतम् मनूद्यैव अभिहितो ज्ञायते, अन्यथा प्रज्ञापनाद्यागमसम्युत्पद मानुषीणाम् वैक्रियसमुद्घातकथनम् असङ्गत स्यादिति, अन्यथा वा बहुश्रुतैः परिभाव्यम्

ननु अष्टाविंशतिव्यतिरिक्ता अन्या अपि काश्चिल्लब्धयः सन्ति न वा ? उच्यते, सन्त्येव प्रवचनसारोद्धारवृत्त्योक्तत्वात् तथा च तत्पाठः "एमाइ हुंति लद्धीओ त्ति," एवमता अष्टाविंशतिसंख्याका आदिशब्दादन्याश्च जीवानां शुभाशुभतरतमपरिणामवशात्। असाधारणतपःप्रभावाच्च नानाविधा लब्धय ऋद्धिविशेषा भवन्तीति, इति भव्याऽभव्यपुरुषस्त्रीणां यावन्त्यो लब्धयस्तद्विचारः ॥ ७१ ॥

ननु अणिमाद्यष्टसिद्धय' कस्यां लब्धौ अन्तर्भवन्ति ? उच्यते, वैक्रियलब्धावासाम् अन्तर्भावो ज्ञायते, यत उक्तं योगशास्त्रे श्रीहेमचन्द्रसूरिभि' "वैक्रिया लब्धयोऽनेकधा"

अणुत्वमहत्त्वलघुत्वगुरुत्वप्राप्तिप्राकाम्येशित्ववशित्वाप्रतिघातित्वान्तर्धानत्वकामरूपित्वादिभेदात्,

अणुत्वमनुशरीरविकरण येन बिसच्छिद्रमपि प्रविश्य तत्र चक्रवर्तिभोगानपि भुङ्क्ते १ महत्त्वं मेरोरपि महत्तरशरीरकरण २ लघुत्व वायोरपि लघुतरशरीरता ३ गुरुत्वं वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि मकष्टमसह्यता ४ प्राप्तिर्भूमिष्ठस्य अङ्गुल्यग्रेण मेरुपर्वताग्रप्रभाकरादिस्पर्शसामर्थ्यम् ५ प्राकाम्यम् अप्सु भूमौ इवाऽविशतो गमनशक्तिः यथा अप्सु इव भूमावुन्मज्जननिमज्जन ६ ईशित्व त्रैलोक्यस्य प्रभुता तीर्थकरत्रिदशेश्वर ऋद्धिविकरणं ७ वशित्वं सर्वजीववशीकरणलब्धिः ८ अप्रतिघातित्वम् अद्रिमध्येऽपि निःसङ्गगमन ९ अन्तर्धानमदृश्यरूपता १० कामरूपित्व युगपदेव नानाऽऽकाररूपविकरणशक्तिः ११ इत्येवमादयो महद्धय इति, एवं प्रवचनसारोद्धारवृत्तावपि बोध्यम् । नवरं तत्र एता लब्धय एवाऽऽदि" आदिशब्देन संगृहीता' सन्ति इत्यणिमाद्यष्टसिद्धिविचारः ॥ ७२ ॥

ननु तेजोलेश्याया कियत् क्षेत्राश्रितवस्तुदहनसामर्थ्यम् ? उच्यते, श्रीभगवतीसूत्रे श्रीगौतमपर्षत्के अनेकयोजनप्रमाणक्षेत्राऽऽश्रितवस्तुदहनसामर्थ्यमुक्तमस्ति, एवं प्रवचनसारोद्धारवृत्तावपि बोध्यम् । यत् पुन' क्वचित् तेजोलेश्यायाः षोडशदेशदहनसामर्थ्यम् , उच्यते, तदपि श्रीभगवतीसूत्रे पञ्चदशशतकाऽनुसारतः, तत्पाठस्तु एवम्,, अङ्गोसि समणे भगव महावीरे

समणे णिग्गथे आमतेसा एव वयासि जावतिएण अज्जो गोसालेण मखलिपुत्तेण ममवहाए सरीरगंसि तेय णिसट्ठे सेण अलाहिपज्जत्ते सोलसण्ह जणवयाणं त० अगाण वगाण कलिंगाण मगहाण मलयाण मालव गाणं अच्छाण वच्छाण कच्छाण पाढाण लाढाण वज्जीण मोलीणं कोसलगाण आबाहाण ससुत्तराणं घाताए वहाए उच्छादणयाए भासीकरणयाए त्ति" न हि एतत् सामान्यस्य सामर्थ्यमुक्तम् किन्तु विशेषविवक्षयेति ज्ञायते जावतिएणमित्यादि पदोपादानात्, इति तेजोलेश्या सामर्थ्यविचार ॥ ७३ ॥

ननु—सव्वस्स उण्हसिद्ध रसाइ आहारपागजणग च । तेयगलद्धिनिमित्त च तेयग होइ नायव्व ॥

इति जीवाभिगमसूत्रानुकत्वात् तेजोलश्या तु तैजसशरीरात् निर्गच्छतीति ज्ञात, परं शीतलेश्या कुतो निर्गच्छति चेत् ? उच्यत, तैजसशरीरादेव साऽपि प्रभवति, यदुक्त तत्त्वार्थवृत्तौ, यदा उत्तरगुणप्रत्यया लब्धिरुत्पन्ना भवति तदा पर प्रतिदाहाय विसृजति रोषविषाध्मातो गोशालादिवत् प्रसन्नस्तु शीततेजसा अनुगृह्णातीति, लोकप्रकाशे अपि उक्त च

अस्माद्य भवस्येव शीतलेश्याविनिर्गति । स्यातां च रोषतोषाभ्यां निग्रहानुग्रहावित ॥ १ ॥

इत्यादि, इति शीतलेश्या कुतो निर्गच्छतीति विचार ॥ ७४ ॥

ननु आहारकादिलब्धिमतो विद्याधरादयश्च स्वलब्ध्यादिना उत्कृष्ट कियद् दूरं तिर्यग् गच्छन्तीति चेत् ? उच्यते, आहारकशरीरिण उत्कृष्टतो महाविदेहान् यावद् गच्छन्ति, विद्याचारणमुनयो विद्याधराश्च नन्दीश्वरद्वीपं यावत् गच्छन्ति

जङ्घाचारणास्तु रुचकद्वीपं यावत् गच्छन्ति, यदुक्तं, संग्रहिणीवृत्तौ औदारिकस्य तिर्यगुत्कृष्टो विषयो विद्याधरान् आश्रित्य, आनन्दीश्वरात्, जङ्घाचारणात् प्रत्यारुचकपर्वतात् ऊर्ध्वम् उभयान् प्रत्यापण्डकवनात्। वैक्रियस्याऽसंख्येया द्वीपसमुद्रा, आहारकस्य महाविदेह, तैजसकार्मणयो सर्वलोक, इत्यादि, इति विद्याधरादीनां तिर्यगूर्ध्वगमनप्रमाणविचारः ॥ ७५ ॥

श्रीजिनलाभसूर्यादि सद्गुरूणामनुग्रहात्। क्षमाकल्याणगणिना निर्मिते स्मृतिहेतवे ॥ १ ॥

प्रश्नोत्तरसार्धशते पूर्वार्धं परिपूर्णताम्। गत स्याद्य पः कश्चिद् दोष शोध्य स कोविदै ॥ २ ॥

युग्मम् ॥



तिरिअ गई पवत्तइ त्ति सूत्रं धारणार्थंवि, जङ्घाचारणानां विद्याचारणानां, तिरिअंति, तिर्यग्रुचिकादिद्वीपगमनाय इति सद्भावि', इति जङ्घाचारणादीनां लब्धिशालस्वनविचारः ॥ ७७ ॥

ननु साधूनां गृहस्थपार्श्वात् छिन्नमेव वस्त्रं याचित्वा धारयितुं युक्तं, पर यदि छिन्नं वस्त्रं न प्राप्यते तर्हि स्वयं छिन्द्यात् नवा ? उच्यते, यदि प्रमाणोपेतं छिन्नं वस्त्रं न लभ्यते, तर्हि स्वयमपि छिन्द्यात् "बृहत्कल्पवृत्तौ द्वितीयखण्डे साक्षेपपरिहारं तथैव उक्तत्वात्, तथा च सत्रेपतस्तत्पाठः, "नो कप्पइ निग्गंथाण वा निग्गंथीण वा अभिन्नाइ वत्थाइ धारित्तए २

इति सूत्र," नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनामभिन्नानि अच्छिन्नानि वस्त्राणि धारयितुं वा परिहर्तुं वेत्यादि। तस्मात् भिन्नस्यैव वस्त्रस्य ग्रहणं कर्तव्यम्, अथ भिन्नं न प्राप्यते, ततः स्वयमपि भिन्द्यात्, यावता प्रमाणेनातिरिक्तं तावच्छित्वा प्रमाणयुक्तं कुर्यादिति भाव', अत्र केचित् नोदका' प्रेरयन्ति, ननु वस्त्रे छिद्यमाने शब्दः समुत्पद्यते, सूक्ष्मपक्ष्मापयवा उड्डीयन्ते, एते च द्रव्य अपि निर्गता लोकान्तं यावत् प्राप्नुवन्ति, अथवा एवत् प्रेरितामालिता' सन्तो ऽपरे पुद्गला लोकान्त गमन्ति, तथा तस्य देहस्य चलनात् विनिर्गता वातादय' प्रसरन्त' सकलमपि लोकं व्याप्नुवन्ति, ततश्च सूक्ष्मजीवविराधना स्यात्, तस्मादिमम् आरम्भ सावद्यं विज्ञाय यथा लब्धं वस्त्रम् अविविच्य, न छेदनादिकं कुर्यात्, श्रीमगवत्यामपि सकम्पस्य चेष्टावतो जीवस्य यथान्त्यक्रमत्वनिषेधात्, धर्मसाधनस्य देहस्य निर्वाहार्थं भिक्षाभ्रमणभोजनशयनादिचेष्टास्तु न निषेद्धुं शक्या, यतो वस्त्रछे

ददनादिव्यापारो न विधय" इत्य परण लपथ सापिते सरिराद 'मारम्भसिद्धो जह" इत्यादि, किञ्च मो नोदक वस्त्र
दनादिव्यापारो न विधय" इत्य परण लपथ सापिते सरिराद 'मारम्भसिद्धो जह" इत्यादि, किञ्च यो नोदक वस्त्र
छिन्दत एकवारम् एव दोपो भवति, अच्छिद्यमाने तु वस्त्र प्रमाणातिरिक्ते तत् प्रत्युपेक्षमाणस्य ये भूमिलोठनादय' प्रत्युपेक्षणा
दोपा दिन दिन भवन्ति, य च तत् वस्त्र सप्रावृण्वतो विभूषादयो बहवो दोपास्तान् अपि विबुध्यस "अथ पुनः प्रेरक आह"
यदि वस्त्रच्छेदन कुर्व्वतोऽपि सकृत् दोपः संभवति, तत' परिहियताम् असौ, गृहस्थैः स्वयोगेनैव यद्भिन्न वस्त्रं तदेव गृह्यताम्
१ उच्यत, "धतम्वग" इत्यादि यावत् तद्भिन्न मार्गयति, तावत् तस्य सूत्रार्थपौरुष्यादौ हानिर्भवति, तथा च एष वस्त्रच्छेदन
सूक्ष्मो दोप स वस्तुपक्षणामुत्थादिबहुगुणकलितोऽस्ति, यतः प्रमाणभव वस्त्रस तदानीं साधव' कुर्वन्ति, न पुनस्तत्राऽधिक
किमपि सूत्रार्थव्याघातादिक दूषणमस्तीति" किञ्च, यथा प्रयत्नपरस्य साधोराहारनीहारादिविधिविषयः सर्वोऽपि योगो मत
न्मतनाऽपि अनुष्ठस्तया उपकरण छेदनादिकमपि यतनया क्रियमाण निर्दोष द्रष्टव्यम् "यतो द्रव्येण भावेन च चत्वारो भङ्गा
हिंसकत्व भवन्ति, तथा हि, द्रव्यतो नामैका हिंसा न भावतः १, भावतो नामैका हिंसा न द्रव्यतः २१ एका द्रव्यतोऽपि
भावतोऽपि ३, एका न द्रव्यतो नापि भावतः ४, अत्र च आद्यभङ्गके भगवद्भिरहिंसक एव उक्त इत्यादि" तथा उभयपार्श्व
चिउम वद्धम् अलक्षण भवति, मध्ये ऊर्ध्वस्फाटितमपि तक्षमलक्षणमेव उपजायते, तद्गुपक्षप्रदमे च प्रत्युतमानादीनाम् उपघातो
भवति, न पुन कोऽपि गुणोऽस्ति न तद्ग्रहीतुम् उचित, किन्तु तक्षस्तवर्ण्णसंस्थानादिलक्षणयुक्त एव उपधिः साधूनो ज्ञानद
र्शनचारित्रवृद्धिजनकत्वात् धारयितव्यः, ततश्च स्थितम् एतद् विधिनैव तथा वस्त्रं छेदनीय यथा प्रमाणयुक्त भवति, अन्यथ

साधुर्विसूत्रार्थं यदि वस्त्रं क्षालयति, वारयति, वा धर्षति, वा संप्रमार्ष्टि वा, तदा प्रायश्चित्तं भवति, तथा मूर्च्छया यदि वस्त्र न परिदधे तदाऽपि प्रायश्चित्तमित्यादि, विस्तरार्थिना तु सैव वृत्तिः विलोकनीया इति साधुभिस्छिन्नं वस्त्रं ग्राह्यम् इत्यादि विचार ७८

ननु साध्व्यः स्वयमेव वस्त्राणि याचन्ते किम्वा साधवो गृहस्थेभ्यो गृहीत्वा ताभ्यो ददति ? उच्यते, नहि ता उत्सर्गत स्वयं गृह्णन्ति, किन्तु गुरुभिस्ताभ्यो दातव्यानि, यदि साधवो न भवन्ति, तदा स्वयमपि यतनया याचन्ते, यदुक्त बृहत्कल्प वृत्तौ द्वितीयखण्डे "निर्ग्रन्थीभिरात्मना गृहस्थेभ्यो वस्त्राणि न ग्राह्याणि, किन्तु गणधरेण तासां दातव्यानि, तत्र विधिमाह"

सत्तदिवसे ठवित्ता थेरपरिच्छाऽपरिच्छणे गुरुगा। थेर गणी गणिणीए गुरुगा सयदाण अद्दाणे ॥ १ ॥

इत्यादि साध्वऽभावे साध्व्यः स्वयम् वस्त्रमुत्पाद्य इद कुर्वन्ति

सत्तदिवसे ठवित्ता कप्पेते थेरिया परिच्छति। सुद्धस्स होइ धरणा असुद्धए छेत्तु परिठ्ठवणा ॥ १ ॥

व्याख्या सप्तदिवसान् वस्त्रं स्थापयन्ति, यदि अस्थापयित्वा परिभुञ्जते तदा चत्वारो गुरव' आज्ञादयश्च दोषा', यत एवं तत' स्थापयित्वा कल्प प्रक्षालन कुर्वन्ति, कृते च कल्पे सविरात्त्रम् वस्त्र प्रावृत्य परीक्ष्यन्ते यदि शुद्धं ततस्तस्य धारणं, अथाऽशुद्धम् अशुद्धभावोत्पादकं तदस्य ततस्तच् छित्वा परिष्ठापन कर्त्तव्यमित्यादिः, परिभुक्तानां प्रक्षालनम् अपरिभुक्तानामपि गन्धाद्यानां प्रक्षालनमित्यर्थ', इह विस्तारार्थिना स एव ग्रन्थो विलोक्यः, इति साध्वीनां वस्त्रग्रहणविचारः ॥ ७९ ॥

१ सविरात्त्रं वस्त्रपरीक्षा कुर्वन्ति

ननु साधवो यत्र क्षेत्र चतुर्मासा स्थिता, यत्र च क्षेत्रेऽन्ये संविग्नाश्चतुर्मासीस्थितास्तत्र चेद् वस्त्रादिकं गृह्णन्ति तर्हि कियत् कालाऽनन्तरं गृह्णन्ति ? उच्यते, मासद्वयं परिहृत्य पश्चाद् गृह्णन्ति, कारणे तु तन्मध्येऽपि गृह्णीयुरिति "चतुर्थे" बृहत्कल्प वृत्तौ द्वितीयखण्डे

"सक्खेत्ते परक्खेत्ते वा दोमासे परिहरित्तु गेण्हंति" अ कारणेण णिग्गया त पि घेप्पिज्जाओमिय जाणे ॥ १ ॥

स्वक्षेत्रं यत्र आत्मना वर्षाकल्पः कृतः, परक्षेत्रं यत्र अपरे संविग्ना वर्षाकल्पं स्थितास्तत्र, स्वक्षेत्रे परक्षेत्रे वा द्वौ मासौ परिहृत्य तृतीयमासि वस्त्रादिकं गृह्णन्तीत्यादि "कारणे तु मासद्वयमध्येऽपि गृह्णीयादिति" इति साधूनां चतुर्मासा अनन्तरं यावत् कालेन वस्त्रादिग्रहणं तद्विचारः ॥ ८० ॥

ननु साधवो यत्राश्रये चातुर्मासादिकं स्थितास्तत्र कियत् मासाऽनन्तरं तेषां पुनरवस्थानं कल्पते ? उच्यते, द्विगुणान् मासा नतिक्रम्य पुनस्तत्रावस्थानं कल्पते, नार्वाक्, यदुक्तम् आचाराङ्गसूत्रस्यो द्वितीयश्रुतस्कन्धद्वितीयाऽध्ययनद्वितीयोद्देशके "से इत्यादि" च भगवन्तः साधवः आगन्तारं आगारादिषु ऋतुबद्धं वर्षा वाऽतिवाह्य अन्यत्र मासमेकं स्थित्वा द्विगुणत्रिगुणादिना मासकल्पेन अपरिहृत्य द्विमासं मध्येऽवस्थानम्, अकृत्वा पुनस्तत्रैव वसन्ति, अयम् एवं भूतः प्रतिश्रय उपस्थानक्रियादोषदुष्टो

१ से आगन्तारे सु वा ४ जे भयंतारो उउबद्धियं वा वासावासियं वा कप्प उ वाइणा तत्थेव ते दुगुणा दुगुणेण अपरिहरित्ता तत्थेव भुज्जो संवसंति त्ति

भवति, इत्यतः तत्रावस्थातु न कल्पते इत्यादि, इति साधूनां पूर्वकृतमासकल्पादिस्थाने कियत् कालात् पुनरागमनमिति विचार ॥ ८१ ॥

ननु साधूनां यथा नवकल्पी विहारस्तथैव साध्वीनामपि भवति उत अन्यथा, इति चेत् ? उच्यते, साधूनाम् अष्टौ मास कल्पा नवमो वर्षा कल्पः, साध्वीनाम् तु एको वर्षाकल्पः चत्वारो मासकल्पाः स्युर्यतस्तासां द्विमासा मासकल्पो भवेत्। यदुक्तं "पञ्चकल्पचूर्णौ"

साहूहिं नव वसही ओ घेतव्वाओ अट्ठ उउबद्धे एगा वासाण वसही इत्यादि

अज्जाण पुण पच वसही ओ घेतव्वाओ कम्हा जम्हा तासिं दुमास कप्पो

इत्यादि एव वृद्धकल्पेऽपि बोध्यम्, किञ्च विहारकर्तुकामाः साधुसाध्व्य पूर्वं वसतिं प्रमार्ज्य ततो विहारं कुर्वन्ति, यदुक्तम् ओघनिर्युक्तौ "संयमभयपरिरक्षया पुर्व्वंति" संसार्जितप्रविभया पूर्वं प्रथममेव इत्यर्थः, तत उपधिं गृहीत्वा सञ्चारकं संमाप्य विहारं कुर्वन्तीत्यादि, इति साधुसाध्वीनां मासकल्पकरणभेदादिविचार ॥ ८२ ॥

ननु कस्मिंश्चित् क्षेत्रे स्थितानां साधूनां प्राघूर्णकसाध्वागमने को विधिरिति चेत् ? उच्यते, यदा साधूनां भोजनकाले अन्ये साधव प्राघास्तदा वास्तव्यसाधवो निषेधिकाभवनाऽनन्तरमेव मुखे क्षिप्तं कवलं मुक्त्वा भाजनगतं च मुञ्चन्ति, ततस्ते प्राघूर्णका सक्षेपेण आलोचनां दत्त्वा मण्डल्यां भुञ्जते, एवमपि यदि तेषाम् आसन्नम पूर्वानीत भक्त पर्याप्यते तत साधु एव, अथ न

पर्य्याप्यत ततः सर्वं तेभ्यः प्राघूर्णकेभ्यो दत्त्वा मक्तम्, अन्यत् गृह पर्यटन्ति पात्तब्यमिश्रव', एवमानीय कति दिनानि मर्क प्राघूर्णकेभ्यो दीयत इत्यत आह

तिन्नि दिणे पाहुण्ण सव्वेसिं असहपालवुड्ढाण । जे तरुणा सग्गामे वत्थव्वा बाहिं हिंडंति ॥ २२ ॥

त्रीणि दिनानि प्राघूर्णकत्व सर्वेषां असहबालवृद्धानां कर्त्तव्यं, ततश्च ये प्राघूर्णकास्ते स्वग्रामे एव भिक्षाम् अटन्ति, वास्त व्यास्तु बहिर्ग्रामे हिण्डन्ति, अथ त प्राघूर्णकाः केवला हिण्डितुं न जानन्ति, ततः संघाटकसंयोग' क्रियते, एको वास्तव्य एकश्च प्राघूर्णक इत्यादि "अन्यच" संभोइआ ते चेवत्ति, अथ साम्भोगिकास्तत्र ग्रामे भवन्ति ततस्ते "चेवत्ति"त एव वास्तव्याः सावशो भैक्ष्यम् आनयन्ति, अथ तत्र साम्भोगिकसमीपे प्राप्तमात्राणां कश्चित् श्रावक आगात' स च प्राघूर्णकवत्सल एवं भणति, यद् उत मदीय गृह भिक्षाय साधुः प्रहेतव्य', तत्र उच्यत वास्तव्या एवागमिष्यन्ति अथैवमुक्तेऽपि निमन्त्रयन्ति निर्बन्धं करोति आग्रहं करोति असौ श्रावकस्तत्र "वत्यव्वणं" वास्तव्येन सहैकेन गन्तव्य, यत' स एव वास्तव्य प्राघूर्णकानां प्रमाणम् अत्याधिक वस्तुग्रहण इत्यादिः, 'ओघनिर्युक्तिवृहद्वृत्तिपाठ' संक्षेपेण अत्र लिखितोऽस्ति वं पर्यालोच्य प्राघूर्णकविधिः ज्ञेयः, किञ्च' एकसा माचारीकान् साधून् आभिसार्य्य विधिवत्को भिन्नसमाचारीकास्तु पीठफलकादिना निमन्त्रयेत् न अशनादिना, यदुक्तमाचारा ङ्गश्रुतस्कन्धोद्वितीयश्रुतस्य सप्तमाध्ययनप्रथमोद्देशके "से इत्यादि" पूर्वसूत्रवत् सर्वं, नवरम्, असांभोगिकान् पीठफलकादिना उपनि मन्त्रयेत् यतस्तेषां तदेव पीठफलकादि संभोग्यं नाऽशनादिकमिति। इति साधूनां प्राघूर्णकसाध्वागमने यो विधिस्तद् विचार'॥८३॥

ननु साधुसाध्व्यो रात्रौ वसतिद्वारं स्थगयन्ति नवा ? उच्यते, साध्व्योऽवश्यं द्वारं स्थगयन्ति, जिनकल्पिकसाधवस्तु सर्वथा द्वारं नैव स्थगयन्ति, स्थविरकल्पिकाः पुनः कारणे यतनया स्थगयन्ति, यतो बृहत्कल्पभाष्यवृत्त्योरित्थमेव उक्त मस्ति, तथा च संक्षेपतस्तत्पाठः "साध्वीभिः निशि अवश्यं कपाटादिना वसतिद्वारं स्थगनीयम्, अन्यथा प्रायश्चित्ताऽऽपत्तेः" जिनकल्पिकास्तु सर्वथा द्वारं नैव स्थगयन्ति निरपवादानुष्ठानपरत्वात् तेषां, तथा च जिनानां भगवतां इयम् आज्ञाऽस्ति यत् स्थविरकल्पिकाः कारणे यतनया द्वारं स्थगयन्ति, आह किं तत् कारणं येन द्वारं पिधीयते, उच्यते

पडिणीअ तेण सावय उब्भामगगोण साणणप्पवा । सीय च दुरहियास दीहा पक्खी वा सागरिए ॥ १ ॥

व्याख्या उद्घाटिते द्वारे प्रत्यनीकः प्रविश्य हननम् अपद्रावणं वा कुर्यात्, उपधिस्तेनाः शरीरस्तेना वा प्रविशेयुः, एवं श्वापदाः सिंहव्याघ्रादयः, उद्भ्रामकाः पारदारिकाः, गो बलीवर्दः, श्वान मतीताः, एते वा प्रविशेयुः "अचाप्यसाधि" अनात्मवशः क्षिप्तचित्तादिः, स द्वारेऽपिहिते सति निर्गच्छेत्, शीतं वा दुरधिसहं हिमकणानुषक्तं निपतेत्, दीर्घा वा सर्पाः, पक्षिणो वा काककपोतप्रभृतयः प्रविशेयुः, सागारिको वा कश्चित् प्रतिभयम् उद्घाटद्वारं दृष्ट्वा तत्र प्रविश्य शयीत वा विश्रामं वा गृह्णीयात्

"एक्के कम्मि उ ठाणे चउरो मासा हवंति उग्घाया" । आणाइणो य दोसा विराहणा संजमायाए ॥ १ ॥

१ उद्घाटिते गमनपथे अपद्रावणम् भवति

इत्यादिः द्वितीयखण्डे, इति साध्व्यादीनां रात्रौ द्वारपिधानादिविचारः ॥८४॥

ननु साधवो बहुदिनलङ्घनीये पथि किमपि पाथेयं योग्यं सार्थे गृह्णन्ति नवा? उच्यते, उत्सर्गतो न गृह्णन्ति एव, अपवादतस्तु गृह्णन्ति, अन्यथा प्रायश्चित्तापत्तेः "यदुक्तं बृहत्कल्पभाष्यवृत्त्योर्द्वितीयखण्डे" अगाहणे, कप्पस्स उ "इत्यादि" छिन्ने अच्छिन्ने वा पथि यदि अध्वकल्पं न गृह्णन्ति तदा चतुर्गुरवः, द्विधा च आत्मसंयमभेदात् विराधना, तत्राऽऽत्मविराधना भक्तापलाभे क्षुधार्तस्य परितापनादिना, संयमविराधना तु क्षुधार्तः सन् अध्वकल्पं विना कन्दादिग्रहणं कुर्यात्, अतो गृहीतव्योऽध्वकल्पः, एभिः कारणैः "न गृह्णीयादपि यदि पुरुषाः सर्वेऽपि संहननधृतिबलवन्तः, अध्वाऽपि एकदैवसिको वा? सार्थेऽपि प्रभूतं भैक्षम् अवाप्यते तदपि सुलभं सार्थश्च भद्रकः कालभोजी कालस्थायी च, एवमादीनि कारणानि ज्ञात्वा अध्वपथे न गृह्णीयात्, स पुनरध्वकल्पः कीदृशो ग्रहीतव्य इत्युच्यते "सक्करघयेत्यादि" शर्करया घृतेन च मिश्राणि कदलीफलानि खण्डाखण्डीकृतानि गृह्णन्ति शर्कराऽभावे गुडेन तद् अप्राप्तौ सक्तुकान् घृतगुडमिश्रान् इत्यादि, एतानि स्तोकानि अपि क्षुधां घ्नन्ति" न च तृषां कुर्वन्ति अतस्तद् ग्रहणम् उचितं, तद् अलाभे शुष्कोदनशुष्कमण्डकतन्दुलचूर्णादिकं घृतगुडेन मिश्रयित्वा स्थाप्य, यदि शुद्धं भक्तं लभन्ते ततो नाऽध्वकल्पं भुञ्जते, यावत् मात्रेण वा न्यूनं शुद्धं लभन्ते तावन् मात्रमध्वकल्पं परिभुञ्जते, अनुपस्थापितेभ्यो वा प्रयच्छन्ति, तथा तादृशे मार्गे औषधानि अपि सार्थे प्राप्याणि, सर्वमपि एतदध्वकल्पादिकं प्रथमतः शुद्धं तद्

१ कपाटपिधान इत्यर्थः.

अभावे अशुद्धमपि यावद्, आधाकर्मेति । प्रमाणतः पुनरध्वानं स्तोकं बहु वा ज्ञात्वा तदनुसारेण ग्राह्यम् इत्यादि, एवं यतनया यतित्वा यदा अध्वनो निर्गतास्तदा तमध्वकल्पम् अमुकं मुक्तोद्धरितं वा परिष्ठापयन्ति, शिष्यः पृच्छति, योऽध्वकल्प आधाकर्मिक परिवासितश्च स तावद् आधाकर्मिकत्वेन उत्तरगुणोपघाती, परिवासितत्वेन तु मूलगुणोपघाती, ततः किम् एष ग्राह्य उत प्रतिदिवसं लभ्यमानम् आधाकर्म, अत्रोच्यते, अध्वकल्पो ग्राह्यतां न आधाकर्म, ननु दोषद्वययुक्तोऽसौ, सूरिराह कामम् इत्यादि, कामम् अनुमतं यदि सोऽध्वकल्प एकं तावद् आधाकर्म अपरं च निशि रात्रौ परिवासितं तथापि खलु निश्चितं स एव अध्वकल्पः श्रेयान्, नच आधाकर्म दिने दिने लभ्यमानं वरं, कुत इति चेद् उच्यते, "आधाकर्मेत्यादि", यदा आधाकर्म दिने दिने लभ्यते तद् असकृद् अनेकवारं जीवोपघातः, अध्वकल्पे तु यदा आधाकर्म तत्र सकृदम् एकमेव वारं जीवोपघातः, पूर्वहताश्च ते जीवा न दिने दिने हन्यन्ते, अतोऽध्वकल्प एव वरं न आधाकर्म, ये पुनः अविदितप्रवचनरहस्या अध्वकल्पं मूलो त्तरगुणोपघातिनं मत्वा न भुञ्जते, आधाकर्म तु केवलोत्तरगुणोपघातिकम् इति मत्वा दिने दिने भोक्तुमिच्छन्ति, ते अत्यन्त निर्घृणाः सत्त्वेषु, अत एव न ते मम संमता इति, इत्यपवादतः साधूनां पथि पाथेयग्रहणादिविचारः ॥ ८५ ॥

ननु गोचर्यादौ साधवो गृहस्थस्य गृहद्वारम् उद्घाटयेयुः नवा ? उच्यते, उत्सर्गतस्तु न उद्घाटयेयुः कारणे पुनरुद्घाटयेयुरपि, यदुक्तम् आचाराङ्गसूत्रस्य द्वितीयश्रुतस्कन्धे प्रथमाध्ययनपञ्चमोद्देशके उत्सर्गतः साधुर्गृहद्वारं नोद्घाटयेत् सति कारणे अपवादम्, आह, स भिक्षुर्येषां तद्गृहं तेषां सम्बन्धिनम् अवग्रहमननुज्ञाप्य याचित्वा प्रत्युपेक्ष्य प्रमृज्य च ग्रहोद्घाटनादि

कुमादिवि एवदुक्त भवति, सता द्वारम् उद्घाट्य न प्रवेष्टव्यमेव यदि पुनस्तानायावाद्मानान्त पत उक्तं, तथा ॥
तत्राऽऽह्ले, दुर्लभं वा द्रव्य तत्र भविष्यति, अवमोदर्ये वा सति, एभि कारणैरुपस्थिते सगितद्वारम्यवसिव सन् शब्दं कुर्यात्,
स्वप वा यथाविधि उद्घाट्य प्रवेष्टव्यमिति” इत्यपवादत साधुभिर्गोचर्यादौ गृहस्थस्य गृहद्वारस्योद्घाटनीयमितिविचार ॥ ८६ ॥

ननु कश्चिद् आधुनिका निह्नवा पाखण्डिन स्वभोजनपात्रे एव मूत्र विधाय तेन तत्पात्रं मुखवस्त्रादिक च प्रक्षालयन्ति, तद् युक्तम् अयुक्तम् वा ? उच्यते अयुक्तमेव इदमिति संभाव्यते बृहत्कल्पभाष्यवृत्त्यादौ एतत्करण प्रायश्चित्तस्य उक्तत्वात् “तथा च संक्षेपतस्तत्पाठ “चहगा अद्दाणे वा” इत्यादि, यत्र मोकन पात्रकम् आचामति तस्याऽपि चतुर्गुरव प्रायश्चित्त, क्व इत्याह” यदि मोकन धावति तदाऽर्धधावनमन्यथा भावो विपरिणमन भवेत्, विपरिणताश्च भक्तिगमनादीनि कुर्यु ॥ द्वितीये च दिवसे भिक्षार्थं पात्रक प्रसारिते सति कायिकया कुथितो गन्धः समायाति, ततो लोकः प्रवचनावर्णवादं कुर्यात्, अहो अमीभि रसिककापालिका अपि निर्जिता यदेव पात्रक प्रश्रवणेन आचामन्ति इति, आदिग्रहणेन भावकाणां विपरिणामो भवतीत्यादि परिहार, यत्तु आचाराङ्गादौ मोकप्रतिमा श्रूयते तत् अभिग्रहरूपत्वेन कादाचित्कत्वात् न व्याख्यानम् अर्थतरतीति न कश्चिद् विरोध, इति साधूनां प्रश्रवणेन पात्रादिक्षालनमयुक्तमितिविचार ॥ ८७ ॥

ननु इदसाधुभिर्लघुसाधवो वन्यन्त न वा, तथा साधुभि साध्व्य पार्श्वस्थत्वम वन्द्या न वा ? उच्यते, उत्सर्गतस्तु न

१ एकूतभवतानर्वे यवत्भिवाधावेवद

वन्द्या एव, अपवादपदे पुनर्वन्दनीया अपि बृहत्कल्पभाष्यादौ एवमेव उक्तत्वात्, तथा च संक्षेपवस्तत्पाठः "अंतो इत्यादिः" अन्तरपि भेदैरभ्यन्तरतः स्थितानामपि वन्दनक प्रतीत्य भजना भवति, कथम् इत्याह "सोमिति" योऽवमरात्निकः स आलोचनादौ कार्ये वन्द्यते अन्यदा तु नेति "आयमिति" आयमपरिहारिको न वन्द्यते, स पुनराचार्यान् वन्दते, अयत्नोऽपि उत्सर्गतो न वन्द्यन्ते, अपवादपदे तु यदि बहुश्रुता महत्तरा काचित् अपूर्वं श्रुतस्कन्धं धारयति तत्तस्याः सकाशात् तत्र प्रती तथ्ये तेषवशेषादिषु सापेक्षावन्दनकेन वन्दनीया, न केवलम् वन्द्याः, किन्तु भेदैर्बहिरपि स्थितानां कृतिकर्मापि भजना वन्दना कारणे तेषामपि कृतिकर्मविशेषमिति भाव', अथ न कुर्वन्ति ततो महान् दोषो भवति, यथा अजापालकवाचकम् अवन्दमाना अगीतार्थाः शिष्या दोष प्राप्नुवन्ति इति वाक्यशेष' "इत्यादि'" अथ अजापालकदृष्टान्तमाह 'केनचित् आचार्येण गीतार्थाऽभावे अगीतार्था' साधव' प्रत्यन्तपल्ल्यां क्षेत्रप्रत्युपेक्षका' प्रेषिता', तत्र च अष्टमत एको वाचको राजकुले भृत् कृतप्रमाण' परिवसति, ते च प्रत्युपेक्षितक्षेत्रा' साधव त्वं वाचक लोकस समीपे पृच्छन्ति, कुत्राऽसौ तिष्ठति लोकेनोक्तम् अरण्ये, ततस्तेऽपि तत्र गतास्तं च अजारक्षणप्रवृत्त अष्टमतं दृष्ट्वाऽश्रद्धोऽयम् इति मिथुस्याऽगीतार्थत्वेन शनै' शनै' अपसर्पन्ते, तांश्च तथा दृष्ट्वा वाचकस्य श्रद्धा, किमेते अपसर्पन्तीति "नून मां अष्टमतं ज्ञात्वा, तत' छद्माच्छेदी स वाचकः कुपित' सन् पल्लीपते कथयित्वा तेषाम् अगीतार्थानां सम्बर्ध गुप्तौ प्रक्षेपण कृतवान्, तत्तदन्वेषणार्थं गुरूणां तत्रागमनं ते च त वाचकं वन्दित्वाऽन्वेषका अगीतार्था एते इत्यादि उक्त्वा स्वशिष्यान् मोचितवन्त" एव भेदिनामपि [illegible]

प्रायश्चित्त चतुर्लघुकमित्यादि' "अन्यच्च चरमकरणहीने केवलप्रणामलिङ्गयुक्ते यद् यादृशं वन्दनं क्रियते तादृशम् आह वस्य"

पायाइ नमोक्कारो हत्थुस्सेहो य सीसनमणं च "सपुच्छणऽच्छण च्छोभवंदण वंदण वा वि"

वहिरागमनपथादिषु दृष्टस्य पार्श्वस्थादेः वाचा नमस्कारः क्रियते "वन्दामहे भवन्तं वयमित्येवम् उच्चार्यते इत्यर्थः" अथाऽसौ विशिष्टतर उभयतरस्वभावो वा ततो वाचा नमस्कृत्य हस्तोत्क्षेपम् अञ्जलिं कुर्यात्, ततोऽपि विशिष्टतरे अत्युग्रस्वभावे वा प्राग्पि वाग्नमस्कारहस्तोत्क्षेपौ कृत्वा तृतीयं शिरःप्रणामं करोति "सपुच्छणवि" पुरतःस्थित्वा मत्किम् अपदर्शयता शरीरवार्ताया संप्रच्छनं कर्तव्यम् कुशलं भवतां वर्तत इति" अच्छणवि "शरीरवार्तां प्रच्छयित्वा क्षणमात्रं पर्युपासनम्, अथवा पुरुषविशेष ज्ञात्वा तदीयप्रतिश्रयम् अपि गत्वा छोभवन्दनं संपूर्णं वा वन्दनं दातव्यम् इत्यादि, यतः पार्श्वस्थादेर्वन्दनकेऽक्रियमाणे संयमा त्मविराधनादिकं पश्यति तं प्रति वाचा कायक्रियया वा तथा चेष्टते, यथा तस्य स्वल्पमपि अप्रीतिकं न भवति, अथ अवन्दनेऽपि कोऽप्यपायो न भवति ततो दूरतः वर्जयेत्, इत्यादि' तृतीयखण्डे" तथा पञ्चकल्पचूर्णौ पुनरयं पाठः "जइ समोइओ समोइयं न वदइ पायच्छित्तं विसंभोगो वा, समोइओ संविग्गमसमोइअं वंदइ समोगो न वंदइ पायच्छित्तं विसंभोगो वा, इयरेसिं पासत्थाईण जइ वंदणं करेइ पायच्छित्तं विसंभोगो वा समो इओ सजओ समोइयाओ सजइए पुण्ण वंदइ[1] अह समोइयाण वि एमेव सजइओ एमेव तार्हि समो-

---

1 चतुर्लघुप्रायश्चित्तम्

दिमव्वा जइ न वदति पायच्छित्त विसंभोगो वा, पासत्थाइ यथसकेसु जइ वंदंति तो पायच्छित्त
वा, जइ संजई असंभोइअसविग्ग न वदइ ॥ ४ ॥ पायच्छित्त विसंभोगो वा सजईण सहाणे
तवेव "वचसा नमस्कारो वन्दनमित्यर्थ" एव समोइअस्स पणाम करेइ, समोगो जहेव वदणे तहेव पणामे
सिरेण पणाम करेइ सजओ समोइओ समोइअस्स अंजलिपग्गहं करेइ संभोगो जहेव वदणे तहेव अजलि
पग्गहे हत्थेण, सजईहिं पुण संजयाण अजलिपग्गहो न कायव्वो, जइ करेइ पच्छित्त ४ विसंभोगो वा ण
परि जाई सजपपासे कारणे वइ ताहे मतो संघाडीए अजलिं काऊण परिअइ, जइ याहिं करेंति पाय
[illegible]भोगो वा जइ गुरूण वक्खु आलोए पणाम न करेइ पायच्छित्तं "इत्यादि" इति साधुसाध्वीनां मे
इभिधार ॥ ८८ ॥

आदीनां परस्पर वस्त्रादिदानग्रहणव्यवहार कथम् अस्तीति चेद् ? उच्यते, उत्सर्गतः साधुभिरेकसामाचा-
णि दातव्यानि, कस्मिंश्चित् कारणे सति आहारोऽपि दातव्य, परं तासां समीपे न किमपि ग्राह्यं, तथा
य न पुनस्तेभ्यः किमपि दातव्यं, निष्कारणे यदि ददाति तदा प्रायश्चित्तम् तथा । सांभोगिकसाधुभ्यो
वस्त्रकादव्, तथा पार्श्वस्थादिभ्यो न दातव्यं न पुनस्तेभ्य किमपि ग्रहीतव्यं [illegible]

दाणग्गहण समोगे चउभंगो दानसमोगो नामेगो नो गहणसमोगो ॥ १ ॥ दाणसमोगो उस्सग्गेण सज्जइ ण सजर्गाइ पत्थपत्ताइं दायव्वाणि कारणम्मि य आहारो साणातिगो न किंचि घेत्तव्व गहणसमोगो ॥ २ ॥ गिहत्थसतिरिथणीर्हि मो तेसि न किंचि दिज्जइ जइ तेसि निक्कारणे देइ पायच्छित्त विसमोगो वा, दाणस भोगो गहणसमोगो य ॥ ३ ॥ समोइआण दिज्जइ घेप्पइ य पासत्थाईण ण दिज्जइ नय घेप्पइ ॥ ४ ॥ किंचि जइ तेसि दइ गिण्हइ वा किंचि निक्कारणे पायच्छित्तं विसमोगो वा "इत्यादि" इति साम्भादीनां परस्परं वस्त्रा दिदानग्रहणचतुर्भङ्गिकाविचार' ॥ ८९ ॥

ननु कति विधो वाद, स पुन' केन सार्द्धं साधुभि' कर्त्तव्य केन च नेति चेद्? उच्यते, त्रिविधो वाद' शुष्कवादो[1] विवादो २ धर्मवादश्चेति ३ तेषां लक्षणानि तु उत्तराध्ययनवृत्तौ षोडशाध्ययन उक्तानि अमूनि ॥

शुष्कवादो विवादश्च धर्मवादस्तथापर' । "राजन् नेय त्रिधावाद' कीर्तित' परमर्षिभि" ॥ ९ ॥
अत्यन्तमानिना सार्धं क्रूरचित्तेन वा दृढ । धर्मद्विष्टेन मूढेन शुष्कवाद' प्रकीर्तित' ॥ १० ॥
विजयऽस्यातिपातादि लाघव तत्पराजयात् । धर्मस्येति विधाऽप्येष' तस्वतोऽनर्थवर्धन' ॥ ११ ॥
लं'धिरव्यात्यर्थिना तु स्यात् दुःस्थितेनाऽमहात्मना । छलजातिप्रधानो य' स विवाद इति स्मृत ॥ १२ ॥

---

1 अत्यर्थिना दुःस्थितेन वस्तार्थिना अमहात्मना इति पाठ भ

विजयोद्यम सतीत्या पूर्वं भस्तस्यथादिनः । तद्भावेऽप्यन्तरायादिदोषोऽदृष्टविघातकृत् ॥ १३ ॥
परलोकप्रधानेन मध्यस्थेन तु धीमता । स्वशास्त्रज्ञातसत्त्वेन धर्मवाद उदाहृत ॥ १४ ॥
विजयोऽस्य फलं धर्मप्रतिपत्त्याद्यनिन्दितम् । आत्मनो मोहनाशश्च नियमात् तत्पराजयात् ॥ १५ ॥
इति तत्र साधुभिधर्मवाद एव कारणे सति कर्तव्यो नान्यो द्वौ, सोऽपि साध्वीभि सह न कर्तव्य एव, ताभिरपि तैः सह
नैव कर्तव्य' ग्रामभिक्षापथ', एवम् पक्षसामाचारीकसाधुभिः सह पार्श्वस्थादिभिश्च सह निष्कारणे वादो न कर्तव्य एव, कारणे
तु कर्तव्यो भवति "यदुक्त पञ्चकल्पचूर्णा"

सभोइओ सभोइएण सम वाय करेइ कारणे । परिरक्खणानिमित्त सभोगो सो पुण ॥

एकत्रावित्वामासविवर्जित पक्षप्रतिपक्षपरिग्रहो वाद' सभोइओ सभोइएण सम निक्कारणे वाद करेइ वाय
च्छित्त विसभोगो वा, एव पासत्थाईहिं वि कारणे पुण जइ न करेइ पायच्छित्त विसभोगो वा, सजईहिं
सभोइयो सभोइयाहिं कारणे निक्कारणे वा वाय करेइ पायच्छित्त विसभोगो वा एवमेव "सजईण वा"
इत्यादि ॥ इति त्रिविधवादस्वरूपकथनपूर्वक साधूनां वादकरणाऽकरणविचार' ॥ ९० ॥

ननु समर्थेन सुसाधुना दुस्तृपादिभिर्बाध्यमानानां सुसाधूनां यथा साहाय्यं क्रियते तथा चारित्रहीनानां लिङ्गस्थानामपि
क्रियते नवा ॥ १ ॥ यथा यस्तदस्यापहारियो धर्मादिविनाशकारिणो ...

नवीनमपि अपूर्व रूप्यस्वर्णादिद्रव्यम् उत्पादयेत् नवा ॥ २ ॥ 'उच्यते' चारित्रयुत साधो' सर्वप्रयत्नेन साहाय्यं कर्तव्यं चारित्रहीनस्य तु एकवारं कृत्वा उपालम्भो देयः, यदि पुनरेतादृग् अकार्यं करिष्यसि तर्हि त्वां न मोचयिष्याम इति, मर्यादाभ्र तिपन्न साधुर्मोचित सन् यदि पुनरपि गृह्यते तर्हि शतवारान् अपि मोचनीयः' "पञ्चकल्पचूर्णौ इत्यमेव उक्तत्वात् तथा च तत्पाठ" समत्थय साहुणा लिंगत्थार्थं पि साहज्जं कीरइ "तत्र" चारित्रसहितस्य सर्वप्रयत्नेन कर्तव्य "यः पुनश्चारित्रही नस्तस्य सकृत् कार्य" तस्स पुणो काउ उवालम्भइ जइ पुणो एरिसं करेसि तो ते ण मोएमो, लिंगं अणुमुयतस्स जीविया वोदस्स अपुब्बधम्मस्स वि कीरइ अहेव संविग्गस्स "इत्यादि" कयाइ मोइओ सतो पुणोवि घेपिज्जा किं मोएयव्वो न मोएयव्वो" उच्यते "सय पि वारा मोएयव्वो मज्जायापडिवन्नो" इत्यादि १ "तथा चैत्यनिमित्तं नवीनं रूप्यस्वर्णादिद्रव्य साधुना नोत्पादनीयं एहस्थकृत्यत्वात् तस्येति, यदि उत्पादयति तर्हि तस्य ज्ञानदर्शनचारित्रादिशुद्धिर्न भवति, पञ्चकल्पचूर्णा निषिद्धत्वात्, तत्पाठस्तु अग्रे दर्शयिष्यते" २ तथा पूर्वप्रवृत्तानि चैत्यसम्बन्धिक्षेत्रहिरण्यमाण्डादीनि, यदि लिङ्गस्था राजबलेन अपहरन्ति, राजभटादिर्वा अपहरेत्, तर्हि तपोनियमसंयमयोऽपि साधुर्यदि न मोचयति उपमं वा न कराति तदा तस्य ज्ञानादिशुद्धिर्न भवति, आशातना च भवति, कथं मोचयति तत्र उच्यते, एवं कार्ये समुत्पन्ने सति राजादी नाम् पूर्व मधुरवाक्यैरनुशिष्टिः क्रियते, धर्मो वा कथ्यते, तद् अनिच्छतां च प्रासादकम्पनादिना भयपीडादिकं समुत्पाद्य विधा कर्तव्या "यदुक्त पञ्चकल्पभाष्यचूर्णौ" चेइअ निमित्त रूप्पहिरण्णसुवण्ण अपुव्व उप्पाएइ तस्स णाणदं-

सणचरित्तमनोभरणाइघातिकरणसोही न भवइ "गाहा" सेसहिरण्ण जया पुण पुव्वपयसाणि सेसहिरण्णपुप्फचउप्पयाइ जया मह वा चेइयाण लिंगत्था वा चेइअदव्वं राउलबलेण सायंति रायमहाई वा अच्छिदणा तया नवनियमसपउत्तो वि साहू जइ न मोएइ वा धार वा न करेइ तया तस्स नाणाइसुद्धी न भवइ असायणा य भवइ एव समुप्पण्णे कज्जे रायाईण पुव्वं अणुसिट्ठी कीरइ, धम्मो वा से कहिज्जइ, अणिच्छंतस्स असट्ठाणेण वा अवहरंति, वसोचेउ पासाय वा कपेति" किमिदम् इत्यादि वेसलमेरुसवाडपत्रपुस्तकस्य त्रिपत्रपिकसतसम १६३ पत्रे, तथा

कुलगणसघचेइयपयिणासाईस्र कारणेसु नाणदरिसणचरित्ताइय पडिसेवमाणो सुद्धो जयणाए ॥१९८॥ त्तिपाठः अदनवत्यधिकैकशते पत्र, इति समर्थसाधोरापद्गतसाधुपार्श्वसादिसाहाय्यकरण १ चैत्यनिमित्ताऽपूर्वद्रव्याऽनुत्पादन २ चैत्यद्रव्यापहारकादिदुष्टजननिग्रहादानादि ३ विचारः ॥ ९१ ॥

ननु चैत्यगृहे जिनप्रतिमोपरिभ्रमरीछत्रादिकं चेद् भवेत् यदि तावत् उपयुक्तभावाद्यभावे सुसाधुना तत् तदपनयन कार्यं न वा, उच्यते, अल्पदोषत्वात् कर्तव्यमेव, अन्यथा गुरुप्रायश्चित्ताऽऽपत्ते", यदुक्तम् बृहत्कल्पभाष्यादौ ॥

छभाकोलिगजालिगकोत्थलहारी अ उवरिगेहे अ सांडितमसाडिते लहुगा गुरुगा य भत्तीए ॥ १ ॥ त्ति

अपमर्थ कोऽपि महात्मा काऽपि प्रासादौ जिनप्रसादं दृष्ट्वा चैत्य नमस्कर्तु मध्ये गतः, तत्र कश्चित् [illegible]

कोऽपि यदि स्वयं सन् न दूरी भगवत्प्रतिमाया उपरिष्टात् लूताकोलिक जालिकभ्रमरीगृहादिक दृष्ट्वा च यदि उपेक्षां कुर्वीत, ... आशातनाहेतुकादीन् अपि आभित्य
यात् तदा गुरुप्रायश्चित्त प्राप्नोति, तदकरणे तु लघुप्रायश्चित्तमिति, एव जिनप्रतिमोपरि
योग्यम्, इति सुसाधूनां जिनप्रतिमाऽऽशातनानिवारणविचार' ॥ १२ ॥

ननु साधुभिर्वस्त्राणि कदा प्रक्षालनीमानि, अप्रक्षालने च को दोषः, उच्यते, वस्त्राणि वर्षाकालाद् अर्वागेव प्रक्षाल्यानि,
अथ न प्रक्षाल्यन्त तत एव दोषा भवन्ति ॥

अइभारचुडणपणए सीयलपावरणऽजीरगेलन्ने । ओभावण कायवहो वासासु अधावणे दोसा ॥

मलेन अतिगुरूणि भवन्ति, तथा, चुडणमिति, जीर्यन्ते पनकश्च तत्र लगति, ( पनक' ) ( फुल्ली ) शीतकालप्रावरणे चाऽजीर्णं
भवति, ततश्च ग्लानता भवति,, तथा "ओहावणत्ति" परिभवो भवति कायवधश्च भवति, तानि हि आर्द्राणि अप्कायसन्ति सन्ति
अप्कायादीन् विनाशयन्ति, एव वर्षासु अप्रक्षालने दोषा , कदा प्रक्षालनं कार्यमित्याह ॥

अप्पत्ते चिअ वासे सव्वं उवहिं धुवंति जयणाए । असईए दव्वस्स उ जहन्नओ पायनिज्जोगो ॥

अप्राप्त एव वर्षाकाल अर्धमासमात्रेण सर्वम् उपधिं प्रक्षालयन्ति यतनया "दव्वस्सत्ति" उष्णोदकस्य अल्पत्वे
जघन्यतोऽपि पात्रपरिकर' प्रक्षाल्यः, यत्र गृहस्था भिक्षां प्रयच्छन्तो न जुगुप्सन्ते "इत्यादि" ओघनिर्युक्तिसूत्रवृत्त्यो', किंच
चीवरप्रक्षालनाय गृहस्थभाजनेषु कुण्डादिषु निम्बोदकग्रहणं कुर्वन्ति, कदा मेघे प्रवर्ष्य स्थिते सति गृहीते च क्षार' प्रक्षेपणीयो येन

सचित्तों न भातीत्यादि, वस्त्रप्रक्षालनानन्तरं,, कल्प्यन्ति,, पश्चात् तस्य प्रक्षालनभवस्य एककल्याणकं प्रायश्चित्तं दीयते, उपवा-सद्वयरूपम् इत्यर्थ , इत्यादि' सर्वोऽपि अधिकारस्तत्रैव बोध्यो यस्तु आचाराङ्गे "न धोइज्ज इत्यादिपाठः स तु मायो जिनक-ल्पिकापेक्ष इति ध्येयम्, इति साधूनां वस्त्रप्रक्षालनविचार' ॥ ९३ ॥

ननु यदि वस्त्रेषु यूका समुत्पद्यन्ते तर्हि प्रक्षालनसमये को विधि', उच्यते, वस्त्रान्तरितहस्तेन अन्यस्मिन् वस्त्रे षट्पदीसंक्रा-मणं कृत्वा पश्चात् तत्प्रक्षालनं कार्यमिति "यदुक्तम् , ओघनिर्युक्तिसूत्रवृत्त्योः" तत्र च षट्पदीसंक्रामणं कथमित्याह ॥ "जयणा संकामणा" यतनया वस्त्रान्तरितहस्तेन अन्यस्मिन् वस्त्रे षट्पदी' संक्रामयन्ति ततो धावन्ति, इत्यादि, इति साधूनां वस्त्रान्तरे यूकासंक्रमणविधिविचारः ॥ ९४ ॥

ननु स्थण्डिले व्रजन्तः कियन्त' साधवः सम्भूय गच्छन्ति कियद् उदकं च सार्धे गृह्णन्तीति चेत् ? उच्यते, ओघनिर्युक्त्युक्तम् इदमुत्तरम् "दो दो गच्छंति" द्वौ द्वौ गच्छतो न एकको गच्छति, तत्र च "तिप्पहुदगं तु घेत्तूण" त्रयाणां साधूनाम् अर्थे यावत् उदकं भवति तावत् मात्रं द्वौ गृहीत्वा व्रजत' परं न पुगलिवो समभेपिस्सो" इत्यादि "विस्तरार्थिना तु सैव विलोक्या, पुनस्तदा इष्टका चीरादिमयानि डगलानि पुतप्रोञ्छनार्थं गृह्यन्ते, इति बृहत्कल्पवृत्तौ" इति साधूनां स्थण्डिलगमनविधिविचारः ॥ ९५ ॥

ननु साधव परस्परं कियद् अन्तरिता' स्वपन्ति पार्श्वभ्यश्च कियद् दूरं स्वपन्ति "उच्यते" उत्सर्गतः परस्परं हस्तत्रयाऽन्त-रिता स्वपन्ति [illegible]

[illegible] साधूना [illegible] ॥ [illegible] ॥
इत्यादिरत्र बहुविस्तार' स ओघनिर्युक्तरवगन्तव्य', इति साधूना [illegible]

ननु पथि गच्छता साधुना कथं मार्गं प्रष्टव्य, उच्यते, बालाय स्थविराय च पुस्त्रीनपुंसकरूपाय न प्रष्टव्यः, किन्तु मध्यमवयस्कपुरुषद्वयाय प्रष्टव्यस्तत्रापि साधर्मिकगृहस्थद्वयाय तदभावे अन्यधार्मिकमध्यमपुरुषद्वयाय धर्मलाभपुरस्सरं प्रियपूर्वकं प्रष्टव्यम्, शेषेषु अष्टसु भदेषु दोषा भवन्ति, पृच्छत ते एव दोषा समधिका', संयतीवर्गे संयतीविषये पृच्छत सतः, केन प्रष्टव्यम्, शेषेषु अष्टसु भदेषु दोषा भवन्ति, पृच्छत ते एव दोषा समधिका', संयतीवर्गे संयतीविषये पृच्छत सतः, केन त दोषा इत्याह ॥

थेरो पहु न आणइ बाल्पपचये न जाणइ या वि ॥ पडिस्थिमज्झिमसका इयरे न आणति सका य ॥ ४९ ॥

क तर्हि मार्गस्थितम प्रच्छनीयम् इत्याह ॥

पासट्ठिओ पुच्छिज्जा वदमाणं अवदमाण वा अणुवइऊण य पुच्छेज्जा तुण्हिक नेय पुच्छेज्जा ॥ ५० ॥

पार्श्वे स्थित समीप व्यवस्थित' पृच्छत्, किं विशिष्टं सन्त पृच्छत् वन्दन कुर्वाणम् अकुर्वाणं वा अथ असौ समीपम् अति क्रम्य यास्यति ततोऽनुमजन वा कृत्वा कतिचित् पदानि गत्वा प्रष्टव्य', अथाऽसौ पृच्छ्यमानोऽपि न किंचिद् वक्ति तूष्णीं व्रजति ततो नैव प्रच्छनीय इति, यदा तु तादृग् पुरुषद्वय नास्ति तदा दृष्टस्थविरवृद्धादिरपि यतनया पृच्छय' "इत्यादि ओघनिर्युक्तौ" इति साधूनां पथि मार्गप्रश्नविचार' ॥ ९७ ॥

१ [illegible] पृच्छत: २ [illegible] प्रपञ्च करोति अथवा पथे न जानाति

ननु ग्लानसाधोः प्रतिचरणे यथा ऐहिको गुण साधुकारप्राप्त्यादिस्तथा पारलौकिकोऽपि कश्चिद् गुणो विद्यते नवा, उच्यते, अस्ति एव, आगमे तस्य तीर्थंकरभक्तितुल्यत्वेन अभिधानात् अर्हद्भक्तेस्तु परत्र स्वर्गापवर्गहेतुत्वाद् इति "यदुक्तम् ओघनिर्युक्ति वृत्तौ "गिलाणत्ति" साधु कदाचित् तत्र ग्रामे प्रविष्ट स्व शृणुयाद् यद् उत अत्र ग्लान आस्ते, ततश्च तत्परिपालनं कार्यं परिपालने च कथं न पारलौकिका गुणा इति ॥

जो गिलाण पडियरइ सो म पडियरइ जो म पडियरइ सो गिलाण पडियरइ त्ति"

वचनप्रामाण्यादित्यादि, तथा बृहत्कल्पवृत्तौ प्रथमखण्डेऽपि उक्त ॥

जो गिलाण पडियरइ से मम नाणेण दसणेण चरित्तेण पडिवज्जइ "इत्यादि भगवदाज्ञाऽऽराधनादिति" इति ग्लानसाधुप्रतिचरण भगवद्भक्तिवत् महाफलमितिविचार ॥ ९८ ॥

ननु सुसाधुना ग्लानस्य पार्श्वस्थादे' प्रतिचरणं कर्तव्यं नवा, उच्यते, जनापवादवारणार्थं सन्मार्गोपवारणार्थं च सोऽपि कर्म कर्तव्यमेव यदुक्तम् ओघनिर्युक्तौ

"एस गमो पचण्ह वि नीयाईण गिलाणपडियरणे"। फासुअकरणनिकायण कहणपडिक्कामणागमण ॥२२॥

समासणे वि सद्धो देउलियसरदजयणसवएसो अविसेसे निन्हगाण वि न एस अम्ह तओ गमण ॥२३॥